# प्रस्तावना.



इह खलु जगति जनिमतां श्रेयसे नित्यनैमित्तिकादिकर्मजातमन्तरेण न खलु कारणं किमपि चकास्ति. तच्च कर्मजातं अधिकारिभिर्निगमनिगदितनियमानुसारेणानुष्ठितमेव भवति फलोद्भावनाय. अधिकारश्च प्रतिबन्धविधुरः शौचकालादिभिरनेकैरवयवैर्लसति. प्रतिबन्धश्चाशौचादिरिति कर्माधिकारप्रतिबन्धतया कर्मविशेषनिमित्ततया चाशौचस्यावश्यमवगन्तव्यतायां तादृशाशौचप्रतिपादिका बह्वीः स्मृतीः प्राचीकटन् महर्षयः. तथापि, विक्षिप्य वर्णिताभ्यस्ताभ्य ईदृग्रूपमाशौचम्, इयांस्तत्र भेदः, तत्रेदमनुष्ठेयम्, इदं नेतीतिकर्तव्यतावगतिरसुकरेति तदितिकर्तव्यतायाः सुखाधिगत्यै भगवान् निखिलजगन्नियन्ता नारायणः स्वीकृतविप्राकृतिरेनं हारीतकुलतिलकं **वेङ्कटेशं** निजादेशपूरणचणं स्मृतिविचारविचक्षणमेतदाशौचसङ्ग्रहग्रन्थकरणाय पुनस्तद्व्याख्याकृतये चाचूचुददिति व्याख्यानाद्यन्तभागयोर्ग्रन्थकृतैव स्फुटीकृतम्. ग्रन्थकर्तायं **सरस्वतीवल्लभ** इति बिरुदाभिधेयभाजनमासेत्यनुमीयते. अयं टीकायां, मूले सङ्गृहीतस्ववाक्यानां प्रमाणतया बह्वीः स्मृतीरुदाहरन्नपि विशेषेण मानयति याज्ञवल्क्यस्मृतिम्. वैद्यनाथदीक्षितेनापि स्वकृते मुक्ताफलाख्यग्रन्थे एतद्ग्रन्थोक्तवाक्यानां गृहीततया ततोऽपि प्राक्तनोऽयं ग्रन्थ इति ज्ञायते. आशौचपरिज्ञानायायं ग्रन्थोऽन्यूनानतिरिक्तविचाररमणीयः सर्वेषां कर्मण्यानामावश्यक

इति बहुभिर्महाशयैः प्रचोदितः कृच्छ्रात् पुस्तकं सङ्गृह्य, मुद्रणपथमनैषम्. तत्रादौ लब्धे पुस्तकद्वये मूलपाठव्यत्यासादस्मिन् पुस्तकेऽपि मूलव्यत्यासः समजनि. तत्र सूचनपत्रिका ग्रन्थान्ते निवेशिता. प्रथमं पुस्तकदानेन प्रोत्साहितृभ्यः श्रीमत्पुत्तिकामठाधीशश्रीसुधीन्द्रपूज्यचरणेभ्यः परःशतान् प्रणामानर्पयन् शोधने साहाय्यकारिभ्यः श्रीमन्मध्वसिद्धान्तप्रबोधिनीसंस्कृतपाठशालाध्यापकेभ्यः उ. श्रीनिवासाचार्येभ्यस्तथान्येभ्योऽपि पुस्तकदातृभ्यो लेखनादावुपकर्तृभ्यो बि. श्रीनिवासाचार्येभ्यश्च शतशो धन्यवादान्निवेदयामि.

इत्यभ्यर्थयिता—

सिद्धार्थि श्रावण
कृष्णपक्ष १२.

**प्रकाशकः.**

# विषयानुक्रमणिका.

**समाप्ता ।**



Printed and Published by
**Pavanje Guru Rau,**
*at the*
*Srikrishna Press, Udipi.*

॥ श्रीः ॥

॥ श्रीमध्वेशाय नमः ॥

# ॥ सटीका शतश्लोकी ॥

**सुरासुरशिरोरत्नं ब्रह्मरुद्रादिसेवितम् ।**
**प्रणम्य पुण्डरीकाक्षं वक्ष्याम्याशौचनिर्णयम् ॥ १ ॥**

मुकुन्दमरविन्दाक्षमिन्दिरेशमरिन्दमम् ।
वन्द्यं वन्देऽघवृन्दारुवृन्दारकमनिन्दितम् ॥ १ ॥
असक्तोऽपि सदाचारश्रद्धयोत्थाप्य चोदितः ।
विष्णुना विप्ररूपेण पुनरप्यनुशासितः ॥ २ ॥
उदैरयमहं विष्णोः प्रसादादघनिर्णयम् ।
तस्येदानीं यथाप्रज्ञं व्याख्यामाख्यातुमुत्सहे ॥ ३ ॥
अत्रानुक्तदुरुक्तादि क्षन्तुमर्हन्ति साधवः ॥ ४ ॥
मात्सर्येण न हि प्रयोजनमतो निर्मत्सरा मत्कृतं
गृह्णीध्वं सुधियोऽघनिर्णयमिमं शङ्कातमोभास्करम् ।
योऽनेकस्मृतिदर्शितार्थलहरीमेको व्यनक्त्यञ्जसा
यस्मिन् सङ्ग्रहतोऽपि सन्त्यतिशया यद्धारकः पूज्यते ॥ ५ ॥

ननु प्राचीनाशौचसङ्ग्रहस्य विद्यमानत्वात्किमर्थमयम्? इति चेन्मैवम् । अतिशयस्यात्र विद्यमानत्वात् । न हि वित्तमस्तीति निधित्यागः । नन्वत्र कथं सङ्ग्रहतोऽप्यतिशयाः सन्ति? अनेकस्मृतिसारसङ्ग्रहादिति

ब्रूमः । अपि च, बहुधाशोधितानुक्तिदुरुक्तिपुनरुक्तिनिरर्थकोक्तिवियुक्तो विषयव्यवस्थायुक्तोऽसङ्कीर्णः पूर्णोपदेशोऽयमघनिर्णयः ॥ स चाशौचदशकं नाम सङ्ग्रहोऽनुक्तादिदोषयुक्तः । तथा हि– 'स्नानं पितुः सर्वदा । ज्ञातीनां पतनादि' इत्यत्र पातभेदेनाशौचवैषम्यं वक्तुं नाज्ञायि । "दाने त्र्यहं चोभयो"रित्यत्र वराशौचं नाभ्यधायि । 'पराश्रयास्वि'त्यत्र पतिभर्त्रोरघं च नाभाणि । 'सूतिकां हित्वे'त्यत्र जनकसूतकसद्भावो नाभाषि । तत्रैव च पितृज्ञात्योः पित्रोर्वान्यतरमरणाशौचेऽन्यतरमरणाशौचं च पितृज्ञात्योरेकतरमरणेऽन्यतरदाहेऽग्निदाशौचं च प्रतिसन्धातुं नाबोधि । 'प्रभाते त्र्यहा'दित्यत्र यामशेषेऽघान्तरागमे च त्र्यहं न समग्राहि । 'मातुर्भ्रातृपितृष्वसे'त्यत्र पुत्र्यास्त्र्यहमाशौचं च नावोचि । 'वीतेत्र्यह'मित्यत्र क्रियाद्रव्याशौचाभावो नाघोषि । 'पुम्प्रसवे'त्यत्र सम्पर्किणो द्रव्याणां स्त्रीपुत्रादीनामघाभावो न समभाषि । 'शिष्टाह'मित्यत्र पुरुषविषयाशौचविशेषो न प्रत्यपादि । 'पुनः संस्कारे'त्यत्र पुत्रतदन्ययोश्च पर्णास्थिदाहभेदनिबन्धाशौचवैषम्यं न प्रादर्शि । 'अनुगता'वित्यत्रानुगमनाशौचं विविच्य नाख्यायि । अवान्तकृत्यं च न निरणायि । इत्याद्यनेकानुक्तिरस्ति । अत एवापूर्णोपदेशश्च । तथा 'जन्मन्यपी'ति अपिशब्देन जन्मन्यह्नि दानप्रतिग्रहणेष्वघाभावस्य 'पुम्प्रसवेत्वि'त्यत्र तुशब्देन सम्पर्काशौचस्य, 'एत'दितिपदेन सूतिकाया अस्पृश्यत्वादिलक्षणाशौचस्य, 'त्र्यहं चोभयो'रित्यत्र चशब्देन पित्रोर्भ्रातॄणां च पूर्णाशौचस्य, 'वीते त्र्यहं त्वि'ति तुशब्देन पक्षिण्याद्याशौचस्य,

दशश्लोकी निषेधः



'नैवानुपेतात्यये' इत्यवधारणेन पितृभ्रात्राशौचस्य, 'मृतेऽप्युपनयादि'त्यादिष्वपिशब्दादिभिरनुक्ताशौचस्य, दुःखेन प्रतिपादितत्वाद्दुरुक्तिरपि ॥ 'दिनं तत्पक्षस्ये'ति तद्गृहे स्थितिमतो ज्ञातेः सूतकाभावेऽपि तत्कथनात्, 'अल्पात्पञ्चदिनाधिका'दिति कलौ निषिद्धस्यापि क्रमाशौचस्य प्रतिपादनाच्च, 'विप्राद्वित्रिचतुर्गुणा' इति धारेश्वरमेधातिथिविश्वरूपविज्ञानेश्वराद्यनादृतवर्णाशौचवैषम्यस्योक्तेश्च, 'स्नानं पितुस्सर्वदा' इति स्नानमात्रप्रतिपादनाच्च, मृताज्ञाते दिनमात्रकथनाच्चेत्यादिभिर्वा दुरुक्तिः ॥ 'चौलात्प्राग्दहनाश्रये' इत्युक्ताशौचस्यैव, 'क्षुराद्कृतविधेः प्रा'गित्यनेन च, 'पराश्रयासु' इत्युक्तस्यैव सूतकस्य, 'एवमनौरसे' इत्यनेन च पुनरुक्तत्वात्पुनरुक्तिः । तथा वर्णानामन्योन्यसम्बन्धस्य कलौ दूरनिषिद्धत्वेऽपि तदङ्गीकारेण 'बान्धवे हीने' इति परस्पराशौचकल्पनान्निरर्थकोक्तिः । तथा दौहित्रादेर्मृतौ मातामहादेस्त्र्यहपक्षिण्योश्च, पुत्र्याः पित्रोश्च मृतौ मिथस्त्र्यहपक्षिण्योश्च, मृतिविषयनिर्हारे जात्युक्तद्विगुणाघयोश्च, पितृमृतौ पुत्रस्य शिष्टाहदशाहाशौचयोश्चेत्यादीनां व्यवस्थाया अकृतत्वात् अव्यवस्थितविषयश्च सः । तथा– दशाहज्ञातिषु त्र्यहाशौचिमातामहादिषु च पक्षिण्याशौचियोनिबन्धुषु च "पित्रोस्ततसहजेषु" इत्युक्तपक्षिण्याशौचसङ्करात्सङ्कीर्णश्च सः । अत एवाशोधितश्च सः ॥ अस्माभिस्तु पराश्रयानौरसपुत्राणां प्राचुर्येणाभावेऽपि क्वचित्तत्सम्भवाद्वा तत्रानुक्तविशेषविवक्षया वा तदाशौचमुक्तम् । एवं समानोदकसगोत्रयोश्च वृद्धैः क्वचित्प्रत्यभिज्ञानात्तदसङ्गृहीतम् । क्रमगुणाशौचयोस्तु विज्ञानेश्वरादिभिर्दूषितत्वात्कलौ निषिद्ध-

**निमित्तं पिण्डदानादेः पुरुषस्थमशुद्धिकृत् ।**
**कालस्नानापनोद्यं यत्तदाशौचमितीर्यते ॥ २ ॥**

त्वाच्चानभिधानमत्यन्ताभावादेव वर्णानां परस्पराशौचानुक्तिः । तथा वर्णानां स्नावाद्याशौचस्य सर्वसाधारणत्वेन विज्ञानेश्वरादिभिः प्रतिपादनाद्बहुस्मृतिसम्मतत्वाच्च तदाशौचवैषम्यानादरः । एवमन्यदपि बोद्धव्यम् । अतोऽत्र प्राचीनसङ्ग्रहानुक्ताशौचप्रतिपादनात्सन्त्यत्रातिशया इति सिद्धम् । अनेन ग्रन्थारम्भचोद्यं गर्भस्रावगतमित्यलमतिप्रसङ्गेन ॥

इह सङ्ग्रहकारस्तावत् प्रारीप्सितस्य ग्रन्थस्य निष्प्रत्यूहनिर्वहणार्थमादौ निजेष्टदेवतां नमस्कृत्य वक्ष्यमाणं प्रतिजानीते– ॥ **सुरासुरेति** ॥ सुरासुरेभ्यः सर्वेभ्योऽप्युत्कृष्टतमं ब्रह्मरुद्रादिभिर्वृन्दारकवृन्दैः वर्णितपदारविन्दं पुण्डरीकाक्षं परब्रह्म प्रणम्य भक्तिश्रद्धापूर्वकं त्रिविधकरणैः प्रकर्षेण नत्वा आशौचनिर्णयं नाम ग्रन्थं वक्ष्यामि ॥ १ ॥

ननु आशौचापरिज्ञाने तन्निर्णयज्ञानं कथम्? इत्याशङ्क्य तदेवादौ विवृणोति– ॥ **निमित्तमिति** ॥ आदिशब्देन प्रेतकर्माद्युच्यते ।

**आशौच लक्षणम्**

अयमर्थः, मुख्यकर्तुः दशाहादिसपिण्डीकरणान्तप्रेतकृत्यस्य सपिण्डसमानोदकयोरुदकाञ्जलिप्रदानस्य बन्धूनां स्नानमात्रस्य निमित्तभूतं पुरुषस्थम् उपलक्षणमेतत् द्रव्यस्थमपीत्यर्थः आश्रयद्वारा द्रव्याणामदुष्टत्वात् अत एव मध्वादीनां केषाञ्चिद्द्रव्याणामघाभावत्वोक्तिः तथोत्तरत्र वक्ष्यते । अशुद्धिकृत् कर्मानर्हत्वकृत् जपहोमाध्ययनादिपर्युदासकमित्यर्थः । अत एव कर्मणां त्यागो वक्ष्यते । एतच्चाघं ज्ञातमेव कर्मानर्हत्वकृद-



**शावे च सूतकेऽघाख्ये कर्मणां त्याग इष्यते ।**
**द्रव्याण्यपि प्रदुष्यन्ति स्वाध्यायश्च निषिध्यते ॥ ३ ॥**

भवति । 'शृणुयाद्यो ह्यनिर्दशम्' "श्रुत्वा तद्दिनमारभ्य" "ज्ञात्वा तद्दिनमारभ्य" इति मन्वादिभिर्ज्ञानोत्तरकालमेवाशौचविधानात् । कालस्नानापनोद्यं कालेन स्नानेन कालस्नानाभ्यामपनोद्यमिति विभज्यार्थो विज्ञेयः कालशब्देन पक्षिण्यहस्त्र्यहदशाहादय उच्यन्ते । स्नानमात्रं सचेलासचेलरूपम् एवम्भूतं यत् तदेव आशौचशब्दवाच्यम् । तथा विज्ञानेश्वरे– 'आशौचशब्देन च कालस्नानापनोद्यः पिण्डोदकदानादिविधेरध्ययनादिपर्युदासस्य च निमित्तभूतः पुरुषगतः कश्चनातिशयः कथ्यते' इति । कालापनोद्यं अन्तश्शवनिमित्तग्रामाशौचं पितृव्यतिरिक्तज्ञातीनां प्रसवाशौचं च । स्नानापनोद्यं ज्ञायमानसम्बन्धबन्धुमरणाशौचं सद्यः शौचं च । कालस्नानाभ्यामपनोद्यं सपिण्डसमानोदकसगोत्रमित्रवर्गमरणाशौचं सम्पर्काशौचं च ॥ २ ॥

अत्र कर्तव्याकर्तव्ये विविनक्ति– ॥ **शावे चेत्यादिना** ॥ अघसञ्ज्ञके शावे च सूतके च कर्मणां त्याग एव न त्वनुष्ठानम्

**सूतककार्याकार्ये**

अघाख्य इत्यधिकोक्तिः परत्र यत्र यत्राघशब्दः तत्र सम्भवविषये शावसूतकयोरुभयोरपि ग्रहणार्था । तत्र द्रव्याण्यपि प्रकर्षेण दुष्यन्ति । अपिशब्दः समुच्चये न केवलमघे पुरुष एव दुष्टः किं तु द्रव्याणि चेति । स्वाध्यायश्च निषिध्यते अत्र चशब्दान्मन्त्रजपादिकं च । अत्र मरीचिः– 'सूतके कर्मणां त्यागः सन्ध्यादीनां विधीयते' कात्यायनश्च– 'आशौचे

सूतके प्रेतके च सन्ध्योपासनादिनित्यकर्माणि स्वाध्यायदानप्रतिग्रहाश्च वर्ज्या' इति। पैठीनसिश्च— 'नित्यानि विनिवर्तेरन्वैतान*वर्जं शालाग्नौ चैक' इति । विष्णुपुराणे च— ''मृतबन्धोर्दशाहान्तं कुलस्यान्नं न भुज्यते । दानं प्रतिग्रहो होमः स्वाध्यायश्च निवर्तते'' एवमेव मानवीयमपि वचनम्, तत्र 'उभयत्र दशाहानी'ति भेदः । उभयत्र शावे च सूतके च । अत्र प्रतिग्रहनिवृत्तिस्मरणाद् द्रव्याणां दुष्टत्वमवगम्यते । होमनिषेधः स्वयं करणे न त्वन्यकरणे । स्मृत्यन्तरे च— 'आशौचे तु दशाहान्तं न कुर्याद्देवतार्चनम् । न कुर्यात्पितृकार्याणि दानं होमं जपं तथा' जपमिति सामान्योक्तेः सर्वमन्त्रजपनिषेधः । आपस्तम्बोऽपि— ''देवताभिधानं चाप्रयत इति ध्याने तु न दोषः'' अभिधानस्यैव वर्ज्यत्वोक्तेः । तथा रहस्याम्नायब्राह्मणे श्रूयते— ''न ह्यस्ति मनस उपघातः अन्तरेण मलवद्वासिनीं सूतिकां शवस्पृष्टिं च'' इति । भरद्वाजश्च— 'मनो हि शुद्धमन्यत्र सूतोदक्याशवस्पृशः । अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा ॥ यः स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचि'रिति ॥ ३ ॥

॥ सान्ध्यमिति ॥ सान्ध्यं कर्म सन्ध्यावन्दनम् एतच्च मानसमेव न तु वाचिकम् । अग्निहोत्रमिति सायम्प्रातर्होममात्रमुच्यते न त्विष्टिपशुबन्धादि । प्रेतकार्याणि पिण्डोदकादीनि एतानि स्नातः कुर्यात् । अघागमात्प्राग् होमार्थं सङ्कल्पितैर्द्रव्यैस्तदभावेऽघरहितश्रो-

* वितानोऽग्नीनां विस्तारस्तत्र भवा वैतानास्त्रेताग्निसाध्या अग्निहोत्रदर्शपूर्णमासाद्याः क्रिया उच्यन्ते । शालाग्नौ गृह्याग्नौ ॥



**सान्ध्यं कर्माग्निहोत्रं च प्रेतकार्याणि चाप्लुतः ।**
**कुर्यादन्येन होमं तु कारयेन्नान्यदाचरेत् ॥ ४ ॥**

त्रियगृहाहृततण्डुलादिभिर्द्रव्यैर्वा होमं गार्ह्येऽग्नौ कालयोर्विहितमन्येनाशौचरहितेन कारयेत् । तुशब्दः स्वकरणनिषेधकः । नान्यदाचरेत् अन्यत्किञ्चिद्वैश्वदेवादिकं श्रौतं स्मार्तं गार्ह्यं वा न कुर्यान्न च कारयेत् । अत्र पुलस्त्यः— 'सन्ध्यामिष्टिं चरुं होमं यावज्जीवं समाचरेत् । न त्यजेत्सूतके चापि त्यजन् गच्छेदधो द्विजः' अत्रान्यसान्ध्येष्ट्यादिकमप्याचरेत् । किमुतानन्यसान्ध्यमिति सन्ध्याया एवावश्यकार्यत्वद्योतनार्थमिष्टिचरुग्रहणम् । यद्वा, अघागमात्प्राक् प्रारब्धेष्टिचर्वनुष्ठानप्रतिपादनपरमित्यविरोधः । एतन्मानससन्ध्याभिप्रायम् । यतः स एवाह— 'सूतके मृतके चापि सन्ध्याकर्म समाचरेत् । मनसोच्चारयेन्मन्त्रान् प्राणायाम*मृते द्विजः' इति । यत्तु विष्णुपुराणवचनम्— 'सर्वकालमुपस्थानं सन्ध्ययोः पार्थिवेष्यते । अन्यत्र सूतकाशौचविभ्रमातुरभीतितः' इति तद्वाचनिकाभिप्रायम् । ननु, सन्ध्यावन्दनविच्छित्तिर्दोषायेति चेन्न । मनसैव कृतत्वात् । 'राष्ट्रक्षोभे नृपाक्षिप्ते रोगार्तौ शावसूतके । सन्ध्यावन्दनविच्छित्तिर्न दोषाय कदाचन' इति वाचनिकसन्ध्याविच्छित्तौ दोषाभावस्मृतेश्च । अत्र व्यासो विशेषमाह— 'प्रक्षिपेत्सूतके त्वर्घ्यं गायत्रीं तु समुच्चरन् । दत्वा प्रदक्षिणं कुर्यात्सूर्यं ध्यायेत्ततो द्विजः'(गायत्रीमुच्चरन्नर्घ्यप्रक्षेपणमात्रं कुर्यादन्यन्मार्जनमन्त्रजपादिकं मनसा कुर्यादि-

सन्ध्या वन्दने

* अमन्त्रकमेव प्राणायामं कुर्यादिति यावत् ।

त्यर्थः । अत्रार्घ्यप्रक्षेपमात्रस्य वाचनिकत्वाभ्यनुज्ञानात्, सन्ध्यामात्रानुष्ठानस्य मानसत्वप्रतिपादनाच्च, वचनान्तराभावेनान्यकर्मोपलक्षणत्वानुपपत्तेः 'शुचिना कर्म कर्तव्य'मिति शुद्धेरपि कर्माङ्गत्वविधानाच्च, प्रत्युत मन्वादिभिर्नित्यानामपि निवृत्तिस्मरणाच्च सन्ध्याव्यतिरिक्तं कर्म मनसा न कार्यमिति सिद्धम् ॥ वैय्याघ्रपादः– 'स्मार्तकर्मपरित्यागो राहोरन्यत्र सूतके । श्रौते कर्मणि तत्कालं स्नातः शुद्धिमवाप्नुयात्' इति । कण्वश्च– 'अग्निहोत्राहवं कुर्यादन्याभावे स्वयं द्विजः । कुर्यात् स्नात्वार्द्रवासास्तु तस्मात्कालादृतेऽशुचिः' होमं विनान्यकालेऽशुचिरित्यर्थः । तथा शङ्खः– **'अग्निहोत्रार्थं स्नानोपस्पर्शनात्तं कालं शौचमिति'** याज्ञवल्क्यः– ''सप्तमाद्दशमाद्वापि ज्ञातयोऽभ्युपयन्त्यपः । अपनः शोशुचदघमनेन पितृदिङ्मुखाः ॥ सकृत्प्रसिञ्चन्त्युदकं नामगोत्रेण वाग्यताः । एवं मातामहाचार्यप्रेतानामुदकक्रिया'' प्रचेताश्च– 'प्रेतस्य बान्धवा यथावृद्धमुदकमवतीर्य नोद्धर्षयेयुरुदकान्ते प्रसिञ्चेयुरपसव्ययज्ञोपवीतवाससो दक्षिणामुखा ब्राह्मणस्योदङ्मुखाः प्राङ्मुखाश्च राजन्यवैश्ययो'रिति । साङ्ख्यायने च– 'गृहद्वारे वामपार्श्वे कुण्डं तदुपर्यश्मानं च निधाय कनिष्ठपूर्वाः स्त्रीप्रथमा वासोदकं पीडयेयुः । यस्मिन् देशे प्राणा उत्क्रान्तास्तद्देशे गोमयेनोपलिप्य दूर्वां तण्डुलानुदकमिश्रान् प्रकीर्य स्वस्त्यस्तु वो ग्रहाणां शेषे शिवं चास्त्विति फलं समभिमृशन्ति' गौतमश्च– 'उदकदानं सपिण्डैः कृतजटस्य कृतचौलस्य' यत्तु, मनूक्तम्– 'नात्रिवर्षस्य कर्तव्या बान्धवैरुदकक्रिया' इति वर्षत्रयादर्वाक् पितृव्यतिरिक्तानां उदकविधिप्रतिषेधपरम् । पितुस्तु तदर्वागपि शिशुदाहे



तर्पणं भवति । तदपि स एवाह– 'जातदन्तस्य वा कुर्युर्नाम्नि वापि कृते सती'ति । गौतमश्च– 'दन्तजन्मादिमातापितृभ्याम्' स्मृत्यन्तरे च– ''शिशोस्त्रिवत्सरादूर्ध्वमुदकं पञ्चसप्तभिः । त्रिरात्रात्पिण्डदशकं तेषां तर्पणं भवेत्'' 'त्रिवर्षादुदकं पिण्डम्' ''त्रिवर्षादिप्रमीतेभ्यः'' ''कन्याबालकुमारेभ्यस्त्र्यहं पिण्डोदकक्रियाः'' इत्यादि स्मृत्यन्तरं पितृव्यतिरिक्तविषयं मन्तव्यम् । विष्णुः– 'यावदाशौचं प्रेतस्योदकं पिण्डं दद्या'दिति । संवर्तो विशेषमाह– 'पूर्वाह्णे वापराह्णे वा तोयमाशौचगामिभिः । संस्कर्त्रैव बलिर्देयः स हि प्रेतस्य बान्धवः' प्रचेताश्च– 'दिने दिनेऽञ्जलीन् पूर्णान् प्रपद्यात्प्रेतकारणात् । तद्वृद्धिश्च प्रकर्तव्या यावत्पिण्डः समाप्यते' अत्र 'यावदाशौच'मिति विष्णुस्मरणात् 'यावत्पिण्डः समाप्यते' इति प्रचेतस्मरणाच्च दशाहान्तमुदकदानं कुर्यादिति गम्यते । यत्तु गालववचनम्– 'पित्रोराशौचमध्ये तु यदि दर्शः समापतेत् । तावदेवोत्तरं तन्त्रं पर्यवस्येत् त्र्यहात्परम्' इति एतदौरसादिपुत्रव्यतिरिक्तविषयम् । तथा कालनिर्णये– 'दशाहमध्ये संक्रान्तिर्दर्शो वाथ भवेद्यदि । तोयं पिण्डं समाप्येत तद्दिनेनौरसेतरैः' इति । वरदराजसङ्ग्रहेऽपि– 'दर्शे प्रेतदिनेषु सत्यपि तथा दद्याद्दशाहं सुतः' स्मृत्यन्तरेऽपि– 'आशौचमध्ये विधुसङ्क्षयश्चेद्दद्युर्दशाहं तिलवारिपिण्डान् । पुत्रीसुतो दत्तक औरसश्च शेषाः सुतास्तत्र समापयेयुः' साङ्ख्यायनेऽपि– 'दशाहमध्ये यदि दर्शो भवति मातृपितृव्यतिरिक्तानां तेनैव पिण्डसमापनम्' श्लोकगौतमश्च– 'अन्तर्दशाहे दर्शश्चेत्तत्र सर्वं

आशौचमध्ये दर्शागमे

समापयेत्। पित्रोस्तु यावदाशौचं दद्यात्पिण्डान् जलाञ्जलीन्॥ मध्येऽपि तत्समाप्तिश्चेत्कुलक्षयकरी भवेत्' अन्यत्रापि— 'अन्तर्दशाहे दर्शश्चेत् पितुर्मातुर्गुरोर्मृतौ । पिण्डं दद्याद्दशाहान्तमितरेषां समाप्यते' सङ्ग्रहे च— 'मातापित्रोर्मृतिप्राप्तौ दशाहे मध्यतो यदि । वनस्पतिगते सोमे शिष्टाहं पूर्ववत्क्षिपेत्' तथा 'अन्तर्दशाहेऽमावास्या यद्यागच्छेत्ततो बलिम् । समापयेत्परः पुत्रो दशाहान्तं समापयेत्' इत्यादिवचनैर्दशाहमेव पिण्डोदकदानविधानात् । 'इन्दुक्षये यदा मृत्युः स्त्रियो वा पुरुषस्य वा । उदकं पिण्डदानं च तदा सर्वं समापयेत् ॥ मातापित्रोर्दशाहं स्याद्यथाविधि समापयेत् । मध्ये पिण्डसमाप्तिश्चेत्कुलक्षयकरी भवेत्' इति विपर्यये प्रत्यवायदर्शनाच्च मातापितृविषये दशाहमध्ये दर्शसम्भवेऽपि पिण्डोदकदानसमाप्तिपक्षो नास्त्येवेति सिद्धः ॥ एवं च सति 'प्रवृत्ताशौचतन्त्रस्तु यदि दर्शः प्रपद्यते । समाप्य चोदकं पिण्डं स्नानमात्रं समाचरेत् ॥ आद्येन्दावेव कर्तव्याः प्रेतपिण्डोदकक्रियाः । द्विरैन्दवे तु कुर्वाणः पुनः शावं समश्नुते ॥ चन्द्रद्वये बलिर्नैव देयः प्रेतस्य शान्तये । यदि दद्याद्द्विचन्द्रे तु दातुः कुलविनाशनम् ॥ अथोर्ध्वं कृष्णपक्षस्य दशम्यां संस्थिते सति । तदानीं सञ्चयेदस्थि न चतुर्थेऽह्नि सञ्चयः ॥ त्रयोदशी कलामात्रा तिथौ यस्य मृतिर्भवेत् । नातिक्रम्य सिनीवालीं कुर्यात्पिण्डोदकक्रिया'मित्यादीनि भविष्यत्पुराणपैठीनसीसङ्ग्रहवचनानि मातापितृव्यतिरिक्तविषयाण्येवेति मन्तव्यानि ॥

**एकोद्दिष्ट काल:**

एवं पिण्डसमापनेऽप्याशौचं दशाहमेव 'यावदाशौचमुदकं पिण्डं दद्याद्द्विजोत्तमः । पिण्डदानविधेरूर्ध्वमाशौचं तु



समाचरेत्' इत्यङ्गिरस्स्मरणात् । 'न सूतकी भवेज्जाते मृते वाभ्यन्तरे गते । मध्ये दर्शेन निर्वृत्ते सूतकं तु यथातथम्' इति संवर्तवचनात् । एवं च सति एकोद्दिष्टं चैकादशाह एव कार्यम् । 'एकादशेऽह्नि मध्याह्ने एकोद्दिष्टं विधीयते' 'आद्यमेकादशेऽहनि' 'एकादशेऽह्नि यच्छ्राद्धमाशौचापगमे' इत्यादिवचनैरेकादशाह एवैकोद्दिष्टविधानात् । किञ्च, 'बलिर्द्विचन्द्रदृष्टश्चेद्भिनस्ति शवदाहकम् । चन्द्रद्वयेऽपि कर्तव्या मातापित्रोर्बलिक्रिया ॥ द्विचन्द्रदर्शने दोषो मातापित्रोर्न विद्यते । अन्येषां तु सपिण्डानां दर्श एव समापयेत् ॥ अन्तर्दशाहे दर्शश्चेत्पिण्डनिर्वापणादिकम् । सपिण्डो वर्जयेत्पुत्रः कुर्यात्पिण्डोदकक्रियाम् ॥ अन्तर्दशाहे दर्शे तु विधेर्नास्ति प्रतिक्रिया । मातापित्रोर्दशाहान्तं यथाविधि समापये'दित्यादिस्मृत्यन्तरवचनानि परःशतानि सन्ति तानि विस्तरभयान्न लिख्यन्ते ॥

**सूतके देव पूजानिषेधः**

बृहस्पतिः— "सूतके मृतके चैव अशक्तौ श्राद्धभोजने । प्रवासादिनिमित्तेषु हापयेन्न तु हापयेत्" जातूकर्ण्यश्च— 'सूतके तु समुत्पन्ने स्मार्तं कर्म कथं भवेत् । पिण्डयज्ञं चरुं होममसगोत्रेण कारयेत्' स्मार्तं कर्म देवार्चनजपदानादि तच्च पूर्वसङ्कल्पितविषयमिति व्याख्येयम्, अन्यथा तन्निवृत्तिपरमन्वादिवचनविरोधात् । 'पिण्डोदकक्रियावर्जं होमं दानं प्रतिग्रहम् । न कुर्याद्यावदाशौचं स्वाध्यायं च सुरार्चनम्' इत्यादिवचनैस्तत्प्रतिषेधाच्च । ननु, 'न ह्यस्ति मनस उपघात' इति श्रुत्यादिभिर्मनसः शुद्धिविधानादयं निषेधो न मानस इति चेन्न । 'मनसोच्चारयेन्मन्त्रा'निति सन्ध्यावन्दनमात्रस्यैव

**न देयं न प्रतिग्राह्यमघे देयं सदापदि ।**
**ग्राह्यं परैश्च तत्रामं तदहर्मात्रवृत्तये ॥ ५ ॥**

मानसत्वप्रतिपादनाद्देवार्चनादेः श्रुतिमन्त्रस्तुतिपठनस्य वा क्वचिदपि मानसत्वे प्रमाणाभावाच्च सन्ध्याकर्ममात्रविषयमेव मनसः शुद्ध्यभिधानमिति युक्तम् ॥ संवर्तः– 'दशरात्रेण शुद्ध्येत वैश्वदेवविवर्जितः । होमस्तु तत्र कर्तव्यः शुष्कान्नेन फलेन वा ॥ पञ्चयज्ञविधानं तु न कुर्यान्मृतिजन्मनोः' कर्तव्यः कारयितव्यः । अघे निषिद्धानामघान्ते करणमाह जाबालिः– 'सन्ध्यां पञ्चमहायज्ञान्न त्यजेत्स्मार्तकर्म च । तन्मध्ये हापयेदेषां दशाहान्ते पुनः क्रिया' इति । सन्ध्यां पञ्चमहायज्ञांश्च स्मार्तकर्म जपहोमादि च कदाचिदपि न त्यजेत् तन्मध्ये हापयेत् त्यजेत् । एवमघमध्ये त्यक्तानां तदन्तेऽनुष्ठानं भवतीत्यर्थः ॥ 'दशाहात्तु परं सम्यग्विप्रः कुर्वीत धर्मवित्' इति संवर्तस्मरणात् ॥ ४ ॥

॥ **न देयमिति** ॥ अघे शावे च सूतके दानं प्रतिग्रहो न कार्यः । तथा मनुपराशरौ– 'दानं प्रतिग्रहो होमः स्वाध्यायश्च निवर्तते' संवर्तश्च– ''विप्रो दशाहमासीत दानाध्ययनवर्जितः'' इति । स्मृत्यन्तरे च– 'पिण्डोदकक्रियावर्जं होमं दानं प्रतिग्रहम् । न कुर्याद्यावदाशौच'मिति । कात्यायनश्च– ''स्वाध्यायदानप्रतिग्रहांश्च वर्जये''दिति ॥ **देयं सदापदीति** ॥ आपच्छब्देनात्यन्तदुर्भिक्षराष्ट्रभ्रंशाद्यत्यलाभादि इहोच्यते । रोगे तच्छान्त्यर्थं गोभूहिरण्यादि । प्राणसंशये उत्क्रान्तिगोदानादि च देयम् । सदा शावसूतकसम्पर्काशौचेऽपि । तथा ब्राह्मपुराणे– 'अकाल-

**दानादि निषेधः**



मृत्योः शान्त्यर्थं महादाने च रोगिणा'मिति आशौचं न विद्यत इत्यनुवर्तते । याज्ञवल्क्यश्च– 'आपद्यपि च कष्टायां सद्यः शौचं विधीयत' इति । सर्वत्राशौचसङ्कोचस्यापदुपाधिकत्वादापदि सद्यः शौचमेवेत्यर्थः । ''स्वस्थकाले त्विदं सर्वमाशौचं परिकीर्तितम् । आपद्गतस्य सर्वस्य सूतकेऽपि न सूतकम्'' इति दक्षस्मरणात् । एतच्च सद्यःशौचप्रकरणे प्रपञ्चयिष्यते ॥ **ग्राह्यं परैश्चेति** ॥ तत्रापदि परैराशौचरहितैः चकारादाशौचिभिश्च तद्दिनमात्रपर्याप्तजीवनाय आममेवाशौचिभ्यः प्रतिग्राह्यं न त्वधिकं न तु कृतान्नं* च । तथा विज्ञानेश्वरे– 'सूतके मृतके चापि दुर्भिक्षे भिक्षितं द्विजैः ॥ उपप्लवे च देशस्य तेषामल्पेन निष्कृतिः' अङ्गिराश्च– 'आमं पूयति संस्कारैः सम्यक्तेभ्यः प्रतीक्षितम् । तस्मादामं गृहीतव्यमन्नं सूतमृतान्तरे ॥ पक्वान्नवर्जं विप्रेभ्यो गोधनं क्षत्रियादपि । वैश्यात्तु सर्वधान्यानि शूद्रादामं कथञ्चन ॥ अनूदकं तु तत् सर्वं गन्धमाल्यविवर्जितम् । यथावर्णेषु यद्दृष्टं प्रतिगृह्णीत वै द्विजः ॥ नाद्याच्छूद्रस्य पक्वान्नं विद्वानाशौचिनोऽपि च । आददीताममेवास्मादवृत्तावेकरात्रकम्' इदंशब्देन अघी शूद्रश्च परामृश्यते । उभयोरपि प्रकृतत्वात् । अवृत्तिर्दुर्भिक्षादौ वृत्त्यलाभः । तथा शूद्रप्रतिग्रहे विशेषमाह मनुः– 'तथैव सप्तमे भक्ते भक्तानि षडनश्नता । अश्वस्तनविधानेन हर्तव्यं हीनकर्मणः' त्र्यहं बुभुक्षितः स्थित्वा चतुर्थदिने दिनमात्रपर्याप्तमाहरेदित्यर्थः ॥ ६ ॥

**सूतके प्रतिग्रहणं**

* पक्वान्नमित्यर्थः ॥

दधि क्षीरं घृतं शाकं पटु पुष्पं तिलौषधम् ।
काष्ठं मूलं फलं मांसं मधु कूपाम्बु चाजिनम् ॥ ६ ॥
पण्यान्यघेऽपि गृह्णीयात्स्वयं तु स्वाम्यनुज्ञया ।
भक्ष्यजातं तथा पक्कमपक्कं तण्डुलादिकम् ॥ ७ ॥

'द्रव्याणि स्वामिसम्बन्धात्तदघे त्वशुचीनि वै । स्वामिशुध्यैव शुध्यन्ति वारिणा प्रोक्षितान्यपि' इति स्मृत्या स्वामिसम्बन्धद्वारा दुष्टत्वेन सर्वद्रव्याणां प्रतिग्रहनिषेधे प्राप्ते केषुचिद् द्रव्येषु प्रतिग्रहानुग्रहमाह– ॥ दधि क्षीरमिति ॥ पटु लवणम् । 'लवणं पटुसञ्ज्ञित' मित्यमरः ॥ ६ ॥

॥ पण्यानीति ॥ आपणस्थानि विक्रयद्रव्याणि । अघेऽपीति अपिशब्दात्सर्वदा च । एतानि स्वामिना भूमौ निक्षिप्तानि स्वाम्यनुज्ञया स्वयमेव गृह्णीयात् । तुशब्दोऽघिहस्तप्रतिग्रहनिषेधकः

**प्रतिग्रह द्रव्याणि**

तथा मरीचिः– 'लवणे मधुमांसे च पुष्पमूलफलेषु च । शाककाष्ठतृणेष्वप्सु दधिसर्पिःपयस्सु च ॥ तिलौषधाजिने चैव पक्कापक्के स्वयङ्ग्रहः† । पण्येषु चैव सर्वेषु नाशौचं मृतसूतके' अङ्गिराश्च– 'यत्तु क्षेत्रगतं धान्यं कूपवापीषु यज्जलम् । अभोज्यादपि तद्भोज्यं यच्च गोष्ठगतं पयः' अन्यत्र स एव– 'यत्तु क्षेत्रगतं धान्यं खले वा गणिकेऽपि वा । सर्वकालं गृहीतव्यं शूद्रादप्यङ्गिरा मुनिः ॥ आमं मांसं मधु घृतं दधि क्षीरमथौषधम् । गुडं तक्रं तथोदश्विद्भोज्यान्येतानि नित्यशः' अर्धाम्बुयुक्ततक्रमुदश्वित् ।

† स्वयमेव स्वाम्यनुज्ञातो गृह्णीयादित्यर्थः ॥



अन्नसत्ररतस्यैव ग्राह्यमित्यंगिरा मुनिः ।
पुण्यत्वात्पुत्रजन्माहे देयं ग्राह्यं तथा परैः ॥ ८ ॥

अत्र पूर्वोक्तदध्यादिव्यतिरिक्ततण्डुलादिपदार्थदानविषये कृतान्नव्यतिरिक्तपक्कापूपादिग्रहणविषये च पुरुषनियममाह– ॥ भक्ष्यजातमिति ॥ निगदव्याख्यानमेतत् । तथा विज्ञानेश्वरे— "पक्कं भक्ष्यजातमपक्कं तण्डुलादि" ॥ ७ ॥

अत्र पक्कापक्काभ्यनुज्ञानमन्नसत्रप्रवृत्तविषयम् । 'अन्नसत्रप्रवृत्तानां आममन्नमगर्हितम् । भुक्त्वा पक्कान्नमेतेषां त्रिरात्रं तु पयः पिबे'दित्यङ्गिरःस्मरणात् । इति । अत्र सत्रशब्दः सन्तताऩ्नदानवाची 'सत्रं यागे सदा दान'मित्यमरः ॥ पुण्यत्वादिति ॥

**पुत्रजन्मनि दानादि**

पुण्यत्वाद्देवतापितृसान्निध्यादिति विशेषः । अत एव दिवा रात्रौ वा पुत्रे जाते निर्विशङ्कं धनधान्यानि दद्यात् प्रतिगृह्णीयाच्च । परैराशौचरहितैः सकुल्यैश्च । तथा चादित्यपुराणम्– 'देवाश्च पितरश्चैव पुत्रे जाते द्विजन्मनाम् । आयान्ति तदहस्तस्मात्पुण्यं पूज्यं च सर्वदा ॥ तत्र दद्यात्सुवर्णं तु भूमिं गां तुरगं रथम् । छत्रं छागं वस्त्रमाल्यशयनं चासनं गृहम्' पराशरश्च– 'खलयज्ञे विवाहे च संक्रान्तौ ग्रहणे मृतौ । पुत्रे जाते व्यतीपाते दत्तं भवति चाक्षयम् ॥ शर्वर्यां दानमस्तीति नान्यत्र तु विधीयते' सङ्ग्रहे– 'पुत्रजन्मनि यात्रायां शर्वर्यां दत्तमक्षयम्' ननु, 'कुमारप्रसवेनाभ्यामच्छिन्नायां गुडतिलहिरण्यगोधान्यवासःप्रतिग्रहेष्वदोष' इति शङ्खस्मरणात् । 'प्राङ्नाभिच्छेदात्संस्कारार्थं पुण्यार्थान् कुर्वन्ति छिन्नायामाशौच'मिति

अघे भोक्तुर्धियाशौचं शिष्टाहं चैन्दवं ततः ।
मोहात्तावदघं यावद्भुक्तं जीर्णं पतत्यधः ॥ ९ ॥

हारीतस्मरणाच्च । कृत्स्नस्य जन्माहस्य दाहप्रतिग्रहार्हत्वोक्तिः कथम् ? इति चेन्नैवम् । बहुस्मृतिसम्मतत्वात् । तदाह याज्ञवल्क्यः– 'तदहर्न प्रदुष्येत पूर्वेषां जन्मकारणात्' वृद्धमनुरपि– 'जाते कुमारे तदहः कामं कुर्यात्प्रतिग्रहम् । हिरण्यधान्यगोवासस्तिलान्नगुडसर्पिषाम्' वृद्धयाज्ञवल्क्यश्च– 'तत्र सर्वं प्रतिग्राह्यं कृतान्नं तु विवर्जयेत्' हारीतश्च– 'जाते कुमारे पितॄणामामोदात्पुण्यं तदहः' गौतमश्च– 'प्राङ्नाभिवर्धनात्पुण्यं तदहरित्येक' इति ॥ शङ्खश्च– 'कुमारप्रसवे नाभ्यामच्छिन्नायां गुडतिलहिरण्यगोधान्यवासःप्रतिग्रहेष्वदोषस्तदह'रित्येके । अत्र दानं सकुल्येभ्योऽपि दद्यादित्याह शङ्खः– 'सर्वेषां सकुल्यानां द्विपदचतुष्पदधान्यहिरण्यादि दद्या'दिति ॥ ८ ॥

॥ अघे भोक्तुरिति ॥ अघे धीपूर्वं भुक्तवतः शिष्टाहमघं भवतीति ततः अघानन्तरमैन्दवं चान्द्रायणं च । अज्ञानात्तत्र भोक्तुः तावदेवाघं यावन्न भुक्तं जीर्णं सदधो व्रजतीति

**सूतकान्नभोजनप्रायश्चित्तम्**

(अग्निं विनान्यत्र ग्रासालाभः स्वयं वा रुग्णोऽन्यत्र गन्तुमशक्तः दुर्भिक्षादि च इत्याद्यापत्काले धीपूर्वमघे भुक्तवतोऽपि दिनमेवाघम् )। एतत्सर्वं सपिण्डस्य न दोषकृत् । नन्वत्र शिष्टाहमिति शब्दस्याप्प्रत्ययान्तस्य 'रात्राह्नाहाः पुंसी'ति शिष्टाह इत्येव प्रयोगः साधुरिति चेत्सत्यम् । तथापि 'कालाध्वनोरत्यन्तसंयोगे द्वितीया' इत्यनुशासना'न्मासमग्निहोत्रं



जुहोति' 'भ्रान्तं देश'मित्यादिवद्द्वितीयान्तः प्रयोगश्च साधुरेव । एवमेकाहत्र्यहादीनामपि प्रयोगसाधुत्वमध्यवसेयम् । अत्र विष्णुः– 'नाशौचे कस्यचिदश्नीयाद्ब्राह्मणादीनामाशौचे यः सकृदोदनमश्नाति तस्य तावदाशौचं यावत्तेषामाशौचव्यपगमः । आशौचव्यपगमे प्रायश्चित्तं कुर्यात्' प्रायश्चित्तं चान्द्रायणम् । तथा सङ्ग्रहे– 'सूतकान्नं नवश्राद्धं मासिकान्नं तथैव च । हीनाचारद्विजस्यान्नं भुक्त्वा चान्द्रायणं चरेत्' वृद्धयाज्ञवल्क्यश्च– 'तत्र सर्वं प्रतिग्राह्यं कृतान्नं च विवर्जयेत् । भक्षयित्वा तु तन्मोहाद्द्विजश्चान्द्रायणं चरेत्' पराशरो विशेषमाह– 'ज्ञात्वा समाचरेत्कृच्छ्रं ब्रह्मकूर्चं* पिबेद्द्विजः' एतदघं दातृभोक्तृभ्यामपरिज्ञाते न भवति एकेनापि ज्ञाते भवति । तथा षट्त्रिंशन्मते– 'उभाभ्यामपरिज्ञातमाशौचं न तु दोषकृत् । एकेनापि परिज्ञातं भोक्तुर्दोषमुपावहेत्' अङ्गिराः– ''अन्तर्दशाहे भुक्त्वान्नं सूतके मृतके तथा । असंस्पृश्यो भवेत्तावद्यावत्तन्न व्रजत्यधः'' मनुः– ''शुक्तानि च कषायांश्च पीत्वा मेध्यान्यपि द्विजः'' अत्र विशेषमाह पराशरः– 'अज्ञानाद्भुञ्जते विप्राः सूतके मृतकेऽपि वा ।(प्रायश्चित्तं कथं तेषां वर्णे वर्णे विनिर्दिशेत् ॥ गायत्र्यष्टसहस्रेण शुद्धिः स्याच्छूद्रसूतके । वैश्ये पञ्चसहस्रेण त्रिसहस्रेण क्षत्रिये ॥ ब्राह्मणस्य यदा भुङ्क्ते द्वे सहस्रे तु जापयेत् । पानीयपाने कुर्वीत पञ्चगव्यस्य प्राशनम्' बोधायनश्च– 'अनिर्दशासन्धिनीक्षीरमपेयमवत्सान्यवत्सयोश्चाविकमौष्ट्रिकमेकशफमपेयपयःपाने कृच्छ्रः अन्यत्र गव्यात् । गव्ये तु त्रिरात्रमुपवासः' 'यावत्तन्न व्रजत्यध' इत्य-

* पञ्चगव्यमित्यर्थः ॥

आपस्त्वहरघे भोक्तुरिदं ज्ञातेर्न दोषकृत् ।
भर्तुर्यद्यदघं तत्तत्पत्न्याः स्यान्नास्य पत्न्यघम् ॥ १० ॥

नेन निष्पुरीषभाव उच्यते । स च सप्तरात्रेण भवति । तथापस्तम्बः— 'अभोज्यं भुक्त्वा नैष्पुरीष्यं तत्सप्तरात्रेणावाप्यते' एतदनुद्गारविषयम् । उद्गारे तु त्रिरात्रमेव । तथा गौतमः— 'अभोज्यभोजने निष्पुरीषभावः त्रिरात्रमभोजनं सप्तरात्रं वेति' हारीतः— 'अभ्यक्तमूत्रपुरीषकरणे मृतसूतकशूद्रान्नभोजने शूद्रैः सह स्वप्ने त्रिरात्रमभोजन'मिति । शङ्खः— 'क्षीराणि यान्यभक्ष्याणि तद्विकाराशने बुधः । सप्तरात्रव्रतं कुर्यात्प्रयत्नेन समाहितः' एतद्बुद्धिपूर्वाभ्यासविषयम् । ब्राह्मपुराणे च— 'सूतके मृतके चापि नरो दुर्भिक्षपीडितः । भोज्यान्नादन्नमश्नीयाद्द्वितीयेऽहनि शुध्यति' भोज्यान्नादाशौचरहितावस्थायामिति शेषः । विज्ञानेश्वरः— 'न चासकुल्ये भोक्तव्यं सकुल्यानां न दोषभाक् । सूतके तु कुलस्यान्नं न दोषं मनुरब्रवीत्' इति ॥ श्रीः ॥ अत्र मातृकं पैतृकं वा भर्तुर्यद्यदघमस्ति तत्पत्न्या अपि स्यादित्याह— ॥ भर्तुर्यद्यदघमिति ॥ श्वशुरश्यालविषये जामातुर्विशेषस्य वक्ष्यमाणत्वात् । तद्व्यतिरिक्तपत्नीजननमरणाशौचं भर्तुर्न स्यादित्यर्थः ॥ अत्र मरीचिः— 'गोत्रान्तरप्रविष्टानां दाय आशौचमेव च । ज्ञातित्वं च निवर्तन्ते तत्कुले सर्वमिष्यते' बोधायनश्च— "सपत्नीकानां सापत्नानां सपिण्डानां दशरात्रम्" स्मृतिचन्द्रिकायां च— 'एकत्वं सा गता भर्तुः पिण्डे गोत्रेऽथ सूतके' इति ॥ ९ ॥ १० ॥

अभोज्यभोजन प्रायश्चित्तम्



अधिसम्पर्कतोऽशौचं भवेत्तद्दिनसङ्ख्यकम् ।
न तद्द्रव्यक्रियास्त्रीणां साम्पर्किकमघं भवेत् ॥ ११ ॥

सम्पर्काशौचमाह— ॥ अधिसम्पर्कत इति ॥ सप्तम्यर्थे तसिः । सम्पर्कशब्देनेदमुच्यते— "प्रेतकर्मोपदेशित्वं तत्कृतिश्चाधिभिः सह । सहवासः सपीत्यादिसम्पर्कार्थं प्रचक्षते" इति सहवासोऽपृथग्वासः । ततश्च एकस्मिन्नपि गृहे पृथग्वासिनोऽन्यस्य सूतकं न किञ्चिदप्यस्तीति ज्ञेयम् ॥ शावं तु भोजनादिनिबन्धनेन स्यादित्युत्तरत्र वक्ष्यते । एवं सम्पर्कवशादागतं साम्पर्किणो द्रव्यस्य क्रियायाः स्त्रीणां च न स्यात् । अत्र बृहस्पतिः— 'यस्तैः सहासपिण्डोऽपि प्रकुर्याच्छयनादिकम् । बान्धवोऽबान्धवो वापि स दशाहेन शुध्यति' तच्छब्देनाशौचिनः परामृश्यन्ते प्रशब्देन पौनःपुन्यसम्पर्क एवोच्यते । न तु कादाचित्कः तस्य स्नानमात्रेण शुद्धेः । दशाहोपन्यासस्तु दशाहसम्पर्कविषयः । ततः कतिचिद्दिनान्यपि सम्पर्के तत्तद्दिनमात्रमघमिति विज्ञेयम् । स्मृत्यन्तरे तु— "प्रेतकर्मणि वक्तॄणामाशौचं कर्तृवद्भवेत् । अन्यकर्मणि वक्तॄणां स्वाहाकारं विनोच्यते" स्मृतिरत्ने च— "सम्पर्काज्जायते दोषो नान्यो दोषोऽस्ति वै द्विजे । तस्मात्सर्वप्रयत्नेन सम्पर्कं वर्जयेद्द्विजः ॥ सम्पर्कमशनं पानं दशरात्रं विवर्जयेत् । तत्सम्पर्काद्भवेदेनः† शुद्धस्यापि न संशयः" यत्तु मनुवचनम्— "सूतकं मातुरेव स्यादुपस्पृश्य पिता शुचिः" इति । तद्दशाहादूर्ध्वं सम्पर्कविषयम् । सूतिकासम्पर्के तु तद्दिनं सूतकं भर्तुरपि भवत्येव । तथा वसिष्ठः— "नाशौचं सूतके पुंसः संसर्गं चेन्न

† एनः आशौचम् ।

**तथा नैव क्रियाद्रव्येष्वतीतं त्रिदिनाद्यघम् ।**
**जीवश्राद्धे भवेत्स्वस्य दशाहान्नेतरेष्वघम् ॥ १२ ॥**

गच्छति । रजस्तत्राशुचि ज्ञेयं तच्च पुंसि न विद्यते" स्मृत्यन्तरे च— 'प्रसूते गृहमेधी तु न कुर्यात्सङ्करं द्विजः । शुद्ध्येन्माता दशाहेन त्वगाह्य पिता शुचिः' विज्ञानेश्वरे च— 'आशौचं यस्य सम्पर्कादापतेद्गृहमेधिनः । क्रियास्तस्य विलुप्यन्ते गृह्याणां च न तद्भवेत्' गृहे भवा गृह्याः । द्रव्याणि स्त्रीपुत्रादयश्चेति व्याख्यातं तत्रैव । मनुः— 'गुरोः प्रेतस्य शिष्यस्तु पितृमेधं समाचरेत् । प्रेताहारैः* समं तत्र दशरात्रेण शुद्ध्यति' ॥ ११ ॥

अतीताशौचविषये क्रियाद्रव्यादावाशौचाभावमतिदिशति— ॥ **तथा नैव क्रियाद्रव्येष्विति** ॥ यदिदं मासत्रये त्रिरात्रं स्यादित्यादिवचनविहितमिति क्रान्ताशौचं तद्यथा सम्पर्काशौचं क्रियाद्रव्याणां नास्ति तथातिक्रान्ताशौचं क्रियाद्रव्याणां नास्ति । तथा चाङ्गिराः— 'अतिक्रान्ते दशाहे तु पश्चाज्जानाति चेद्गृही । त्रिरात्रं सूतकं तस्य न तद्द्रव्यस्य कर्हिचित्' ननु, विज्ञानेश्वरेण तथातिक्रान्ताशौचविषये क्रियाद्रव्यस्त्रीणामप्यघं नास्तीत्यङ्गिरोवचनार्थसमर्थनात् कथं पत्न्याशौचाभावो नोक्तः? इति चेन्न । 'एकत्वं सङ्गता भर्तुः पिण्डे गोत्रेऽथ सूतके' इत्यादिवचनैर्भर्तुः पिण्डगोत्रसूतकेषु भर्त्रा सह तुल्ययोगक्षेमत्वस्मरणात् । ज्ञातिविषयत्वादाचाराच्चातिक्रान्ताशौचविषये पत्न्या अपि त्र्यहादिविधिर्भवत्येव । अत्र क्रियासाधनभूतद्रव्यस्याशौचाभा-

* प्रेताहारैः प्रेतान्नभोजिभिः सपिण्डैरिति यावत् ।



**आन्तं शावेऽङ्गसंस्पर्शं त्यजेत्सूतौ चतुर्दिनम् ।**
**स्पर्शेऽनघस्य तु स्नानं कृच्छ्रोऽन्याशौचिनः स्मृतः ॥ १३ ॥**

वोक्त्या तत्साध्यक्रियाणामप्याशौचाभावः सिद्ध्यतीति ज्ञेयम् ॥ जीवश्राद्धविषये ॥ **जीवश्राद्ध इति** ॥ आपन्ना स्त्री च शूद्रश्च जीवन्नेवात्मनः श्राद्धं कुर्यात् । 'आत्मनोऽपि जलं दद्या'दित्यादिशास्त्रविहिते जीवश्राद्धे स्वस्यैव दशाहं नान्येषु ज्ञातिषु किञ्चिदप्यघं भवति । तथा कण्वबोधायनौ— 'तत्राशौचं दशाहं स्यात्स्वस्य ज्ञातेर्न विद्यत' इति ॥ १२ ॥

**जीवश्राद्ध विषये**

अघिसंस्पर्शे विशेषमाह— ॥ **आन्तं शाव इति** ॥ शावे आन्तं स्पर्शं वर्जयेत् । प्रसवे चतुर्दिनमेव । अत्र मोहाद्वा बुद्धिपूर्वं वा आन्तमाशौचिनोऽङ्गसंस्पर्शे चतुर्दिनेषु सूतकिनोऽङ्गसंस्पर्शे वानघस्य सूतकशावाशौचरहितस्य स्नानमन्याशौचिनो ज्ञातिव्यतिरिक्ताघिनः कृच्छ्रश्च भवति । अत्र मोहादन्याशौचिनोऽङ्गसंस्पर्शे प्राजापत्यः । बुद्धिपूर्वे तु सान्तपनकृच्छ्र इति विवेकः । तथा संवर्तः— "सूतके तु यदा विप्रो ब्रह्मचारी विशेषतः । पिबेत्पानीयकं ज्ञानाद्भुङ्क्ते वाथ स्पृशेत वा ॥ पानीयपाने कुर्वीत पञ्चगव्यस्य प्राशनम् । त्रिरात्रोपोषणं भुक्तौ स्पृष्टौ स्नानेन शुद्ध्यति" स्मृत्यन्तरे च— 'आशौचेऽप्यन्यदाशौचं स्पृशेद्यदि च कामतः । चरेत्सान्तपनं कृच्छ्रं प्राजापत्यमकामतः ॥ स्पृष्टस्पृष्टिभाषणं च सहवासं च वर्जयेत् । अन्याशौचवतां पुंसां न स्पृशेच्च

**आशौचि स्पर्शः**

कदाचन ॥ न स्पृशेयुरनासन्नाः प्रेतस्यासन्नबान्धवान् । जन्मन्यां
विपत्तौ च यावच्चतुरहं भवेत्' चतुरहमिति जन्मविषयम् । न तु मृति
विषयम् । तत्र आन्तमङ्गस्पर्शस्य कलौ वर्ज्यत्वोक्तेः । तथा स्मृतिच
न्द्रिकायाम्– 'सवर्णानां तथा दुष्टैः संसर्गाशौचितैरपि । अस्थिस
यनादूर्ध्वमङ्गस्पर्शनमेव च' इत्युपक्रम्य 'एतानि लोकगुप्त्यर्थं कलेरा
महात्मभिः । निवर्तितानि सर्वाणि व्यवस्थापूर्वकं बुधै'रित्युक्तम्
स्मृत्यर्थसारे च– 'ज्येष्ठांशगोवधदेवरन्यायदत्ताक्षतयोनिपुनर्विवाहादि
कमुक्त्वा, अस्थिसञ्चयनादूर्ध्वमङ्गस्पर्शनमेव च । कलौ युगे त्विमा
धर्मान्वर्ज्यानाहुर्मनीषिणः' इत्युक्तम् । ततश्च 'विपत्तौ चेति' चश
ब्दोऽपिशब्दार्थे वर्तते । विपत्तावपि चतुरहं न स्पृशेयुः किल किमु
जन्मनीति जन्मन्येव कैमुत्तिकन्यायेन चतुरहं न स्पृशेयुरित्येवार्थः
तस्मात् 'स्वाशौचकालाद्विज्ञेयं स्पर्शनं तु त्रिभागतः । दशाहादि त्रि
भागेन कृते सञ्चयने क्रमात् ॥ अङ्गस्पर्शनमिच्छन्ति वर्णानां तत्त्वे
दिन' इति देवलादिवचनानि अवान्तरविषयाणीति मन्तव्यानि । यत्
'सूतके सूतिकावर्जं संस्पर्शो न निषिध्यत' इति वचनं तच्चतुरहादूर्ध्व
मिति वेदितव्यम् । तदूर्ध्वमपि सूतकिनोऽङ्गस्पर्शो ज्ञातिव्यतिरिक्तै
सूतकिना न कार्यः । तथा भृगुः– ''शावाशौचे समुत्पन्ने सूतके
द्विजातिभिः । अन्याशौचवतां स्पर्शो न कर्तव्यो द्विजन्मनाम्'' अ
स्मृत्यन्तरे विशेषः– 'परस्याशौचिनः स्पर्शे शावाशौची कथं भवेत्
मत्या सान्तपनं कुर्यादमत्या तु तदर्धकम् ॥ अस्थिसञ्चयनादर्वाग
शुद्धिर्विधीयते । ऊर्ध्वं त्रिरात्रं विज्ञेयममत्या तु दिनं भवेत् ॥ सूत



शावसंस्पर्शे मत्या कृच्छ्रद्वयं चरेत् । अमत्या कृच्छ्रमेकं स्यादित्युवाच
बृहस्पतिः ॥ १३ ॥

**अन्तश्शवोऽशुचिर्ग्रामस्तत्र होमादि नाचरेत् ।**
**वीथ्यन्तरे सदा कुर्यादेकादशधनुष्परे ॥ १४ ॥**

**अन्तःशव ग्रामाशौचे**

ग्रामविषये– ॥ **अन्तः शव इति** ॥ अशुचित्वादन्तश्शवे ग्रामे होमादिकर्म न कुर्यात् । आदिशब्देन स्वाध्यायजपार्चनभोजनादीनि सङ्गृह्यन्ते । तानि, 'वितस्तिर्द्विगुणारत्निस्ततः किष्कुस्ततो धनुः । धनुः-
सहस्रे द्वे क्रोशं चतुष्क्रोशं तु योजन'मित्युक्तलक्षणेभ्य एकादशभ्यो
धनुर्भ्यः परस्यां पृथग्वीथ्यां सर्वदा कुर्यात् । तथा मनुः– 'नाद्यादन्त-
श्शवे ग्रामे नाधीयान्न जुहोति च । तानि वीथ्यन्तरे कुर्याद्धनुरेकाद-
शान्तरे' स्मृत्यन्तरे च– 'अन्तश्शवो यदा ग्रामस्तस्मिन् ग्रामे तदालये ।
नित्यनैमित्तिकं काम्यं न कुर्यादिति शासनम्' अत्र स्मृत्यन्तरे विशेषः–
'श्रुतिस्मृत्योर्विरोधे तु श्रुतिरेव बलीयसी । तस्मादन्तश्शवे ग्रामे जुहु-
याच्छ्रौतपावकम्' स्मृत्यन्तरे च– 'ग्रामस्थे शवचण्डाले शूद्रेऽप्यशु-
चिसन्निधौ । नाध्येतव्यं न होतव्यं न भोक्तव्यं कदाचन' शूद्रे
सन्निहित इति विशेषः । शूद्राद्यशुचिसन्निधाविति वा पाठः । आपस्त-
म्बश्च– 'अन्तश्शवमन्तश्चण्डाल'मिति ॥ १४ ॥

अत्र विशेषमाह– ॥ **ग्रामे चतुश्शतेति** ॥ यस्मिन् ग्रामे
ब्राह्मणा वसन्ति तस्मिन् चतुश्शतब्राह्मणयुक्ते ग्रामे एकादशधनुर्व्यव-
हितत्वाभावेऽपि वीथ्यन्तरे चतुष्पथव्यवधाने वा नाराचविच्छेदे वा

**ग्रामे चतुश्शतब्रह्मयुक्तेऽप्यन्तश्शवे क्रियाः ।**
**कुर्यात्स्त्रीवृषलानाथबालार्तौ चेत्यथापरे ॥ १५ ॥**

क्रिया होमादिकर्माणि कुर्यात् । अन्तश्शवदोषो नास्तीति भावः । तथा स्त्रीशूद्रानाथबालमरणे कतिचिद्ब्राह्मणयुक्तेऽप्यन्तश्शवे ग्रामे क्रियाः कुर्यादित्यन्ये मन्यन्ते मुनयः । तथा स्मृत्यन्तरे– 'चतुश्शताधिकैर्विप्रैः सम्पूर्णे ग्राममध्यके । विशेषं सम्प्रवक्ष्यामि जपहोमार्चनं प्रति ॥ अन्तश्शवस्य दोषस्तु नास्ति तत्र समाचरेत् । ग्रामे नाराचविच्छिन्ने कुर्याद्भिन्नेऽथ वा पथि ॥ वीथ्यन्तरे वा मृतके हरेरर्चां समाचरेत् । अनाथानुपनीतानां प्रेतायाश्च तथा स्त्रियाः ॥ अन्तश्शवस्य दोषस्तु ग्रामादौ तु न लिप्यते । मुनीनां च यतीनां च परकायप्रवेशिनाम् ॥ मरणं यत्र सम्भूतं तत्र दोषो न लिप्यते । शूद्रादीनां च मरणं सम्भवेद्यत्र कुत्रचित् ॥ आशौचं गृहमात्रस्य ग्रामाशौचं न विद्यते । कुटिके पत्तने चैव खर्वटे राजधानिषु ॥ क्रमेणैवार्चनं कुर्यादुक्तदोषो न विद्यते' इति । यत्त्विदं वचनम्, "सहस्रविप्रसम्पूर्णे ग्रामे तदधिकेऽपि वा । आलयस्य समीपे तु त्रिंशद्दण्डान्तरे मृतौ ॥ अर्चनस्नपनादीनि न कुर्यादेव तत्र तु" इति तदेकवीथ्यादिविषयम् । स्मृत्यन्तरे– 'एकवीथ्यां समारूढे एकवंशगृहे स्थिते । त्रिंशद्धनुष आधस्थ्ये दैवं पित्र्यं च वर्जयेत् ॥ पञ्चाशच्चापसीमान्ते नैकवीथ्यां शवे सति । अर्चनं च हरेः दानं जपहोमादि वर्जयेत्' एवं च, 'ग्राममध्यगतो यावच्छवस्तिष्ठति ग्रामस्य तावदाशौचं निर्गते शुचितामियात्' इति वचनं कस्यचित् । मेकवीथ्येकवंशादियुक्तग्रामविषयम् । शूद्रादन्यशवयुक्तग्रामविषयं च ।



**पूजाविधौ मृतौ शेषं तन्त्रेणैव समापयेत् ।**
**कर्मान्तस्तु बहिर्ग्रामं प्रेतं नीत्वा तदाचरेत् ॥ १६ ॥**

एकवीथ्यादियुक्तत्वेऽपि चतुश्शतब्राह्मणाभावेऽपि ग्रामे शूद्रादिमरणे ग्रामस्य दोषाभावात् । "शूद्राणां मरणं स्याच्चेद्ग्राममध्ये कथञ्चन । आशौचं गृहमात्रस्य ग्रामाशौचं न विद्यते" इत्यादिस्मृतिभ्यः ॥ १५

**कर्ममध्ये ग्राममरणं**

कर्ममध्ये ग्रामे मृतिसम्भवे तत्र कर्तव्यमाह– ॥ पूजाविधाविति ॥ ग्रामगृहदेवतयोः पूजाविधौ प्रारब्धे ग्रामे मृतौ सत्यां मन्त्रं विना तन्त्रेणैव पूजाशेषं समापयेत् । प्रतिष्ठाकर्ममध्ये तु ग्रामाद्बहिः प्रेतं गमयित्वा प्रतिष्ठादि कर्म कुर्यात् । तन्त्रेण कर्मसमाप्तिनिषेधकः तुशब्दः । तथा स्मृत्यन्तरे– "प्रतिष्ठादिषु कालेषु यस्मिन् काले मृतिर्भवेत् । शीघ्रं बहिश्शवं नीत्वा कर्मशेषं समापयेत् ॥ अग्रहारे हरेः पूजा वर्तमाने तु तत्र च । अन्तश्शवं यदि भवेत्ततो नीत्वा तथा बहिः ॥ तच्छवं भस्मसाद्यावत्तावत्तन्त्रेण पूजयेत्" ॥ १६ ॥

**साापिण्ड्य निरूपणम्**

एवं सामान्येनाशौचविशेषं तदभावं च क्वचित्प्रतिपाद्य अनन्तरं परम्परयैकशरीरावयवान्वयसम्भवेन सपिण्डत्वात्सगोत्रासगोत्राणामप्यविशेषेण वक्ष्यमाणाघप्राप्तौ तदतिप्रसङ्गमवधिनियमेन परिहरन् साापिण्ड्यं निरूपयन् सपिण्डाघमाह– ॥ आत्रिपुरुषेति ॥ उभयत्र आङ् अभिविधौ । द्वन्द्वसमाहारश्च । विज्ञानेश्वरादौ स्मृतिषु च त्रिपुरुषं सप्तपुरुषमित्यभियुक्तप्रयोगदर्शनादेवं प्रयोगः । पश्चादव्ययीभावसमासः । तस्मा-

आत्रिपूरुषमेवाघं कन्यायां मृतिजन्मनोः ।
आसप्तपूरुषं पुंसः सापिण्ड्यं च तथा द्वयोः ॥ १७ ॥

दयमर्थः– यावत् त्रयः पुरुषा अनुत्क्रान्ता भवन्ति कन्याया मृतिजन्मनोस्स्ततोस्तावदघं भवति । यावच्च सप्तपुरुषाः सङ्कलिता भवन्ति पुंसः पुरुषस्य मृतिजन्मनोर्विषये च तावदघं भवतीति । आतृतीयपुरुषमासप्तमपुरुषमित्युक्ते तृतीयसप्तमपुरुषाववधिभूतौ स्याताम् । तदन्ये प्रथमपुरुषादयोऽवधिमन्तः स्युः । ततश्च तेषामेवाघं सापिण्ड्यं भवेत् । न तत्पुत्राणां तच्चानिष्टं सर्वस्मृतिलोकाचारव्याकोपप्रसङ्गात् । स मा भूदित्यात्रिपुरुषमासप्तमपुरुषमित्युक्तम् । तथा च पिण्डदातुः प्रपितामहं तृतीयं लेपभाजं कूटस्थमारभ्य प्रथमपिण्डभागिपुत्रेण पिण्डदात्रा सह सप्तपुरुषा अवधिभूताः तत्तत्पुत्रा अवधिमन्तश्च भवन्ति । एवं पिण्डदातृपुत्रादयः षट्पुरुषाः पिण्डदात्रा सह सप्तपुरुषा अवधिभूताः तत्तत्पुरुषा अवधिमन्तश्च भवन्ति । तथासति प्रदातुः प्रागूर्ध्वं चोभयत्र सप्तसप्तपुरुषाणामवधिभूतानां तत्तत्पुत्राणामवधिमतां च सर्वेषामघं भवति । तथा द्वयोरित्यतिदेशात्सापिण्ड्यं च भवति । द्वयोः स्त्रीपुरुषयोः तथा कन्यामृतिजन्मविषये आत्रिपुरुषं पुरुषजननमरणविषये चासप्तपुरुषमघं भवति । तथाद्वयोर्मध्ये कन्याविषये आत्रिपुरुषम् । पुनः पुरुषविषये चासप्तपुरुषं सापिण्ड्यं भवतीति विभज्य तथाशब्दार्थो विज्ञेयः । तच्च सापिण्ड्यमेकशरीरावयवान्वयेन वक्तव्यम् । अन्यथा 'लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः । सप्तमः पिण्डदस्तेषां सापिण्ड्यं साप्तपूरुषम्' इति वचनेन निर्वाप्यपिण्डापेक्षया सापिण्ड्यवर्णने मातृसन्ताने भ्रातृ-



पितृव्यादिषु च सापिण्ड्यं न स्यात् ॥ ननु, एवं सति मातामहादेरपि "दशाहं शावमाशौचं सपिण्डेषु विधीयते" इति मन्वादिस्मृतेर्दशाहाद्याशौचं सापिण्ड्यं स्यात् सपिण्डत्वात् । मैवम् । "आजन्मनस्तु चौलान्तं संस्कृतासु स्त्रीषु नाशौचम्" 'त्र्यहं मातामहाचार्यमातुलश्रोत्रियेषु च' इत्यादिविशेषवचनविहिताशौचविशेषस्य "आदन्तजन्मनः सद्यः" इत्यादिवत् सामान्यप्राप्तदशाहापवादकत्वादत एकशरीरावयवानुप्रवेशश्च शास्त्रतोऽवगम्यते । 'प्रजामनु प्रजायसे' 'आत्मा हि जज्ञ आत्मनः' 'अङ्गादङ्गात्सम्भवसि' 'प्रजायस्व प्रजया' 'एतत् षाट्कौशिकं शरीरं त्रीणि पितृतः त्रीणि मातृतः अस्थिस्नायुमज्जाः पितृतः त्वङ्मांसरुधिराणि मातृत' इत्यादिश्रुतिगर्भोपनिषद्भ्यः 'यथैवात्मा तथा पुत्रः पुत्रेण दुहिता समा' 'तत्रायं जायते स्वयम्' 'पूर्वेषां जन्मकारणात्' इत्यादिस्मृतिभ्यश्च पिण्डो देहसमानः पिण्डो देहो येषां ते सपिण्डाः तेषां भावः सापिण्ड्यमिति व्युत्पत्तेश्च । तच्च सापिण्ड्यमेकशरीरावयवान्वये भवति । तथाहि, पुत्रस्य पितृशरीरावयवान्वयेन पित्रा सहैकशरीरारम्भकत्वेन वा । एवं यत्र यत्र सपिण्डशब्दस्तत्र तत्र साक्षात्परम्परया वा एकशरीरावयवान्वयो वेदितव्य इति विज्ञानेश्वरोक्तम् । तथा क्वचित्तेनैवोक्तम्– 'अतश्चायं सपिण्डशब्दोऽवयवशक्त्या वर्तमानो निर्मन्थ्यपावकजातिवन्नियतविषय एव । तथा च पित्रादयः षट् सपिण्डाः पुत्रादयश्च षट् । आद्यसप्तमः सन्तानभेदेऽपि यतः सन्तानभेदः तमादाय गणयेद्यावत्सप्तम इति सर्वत्र योजनीयमिति च' प्रतिपादितम् । तथा च न निर्वाप्य पिण्डान्वयेन सापिण्ड्यम् । नाप्या तृतीयात् परं

कन्यासापिण्ड्यं न चासप्तमादूर्ध्वं पुरुषसापिण्ड्यं चेति सिद्धम् । अघस्य सपिण्डनिबन्धनत्वादत्र सापिण्ड्योपन्यासः । स्मृत्यर्थसारे– 'यतः प्रभृतिसन्तानविश्लेषः स कूटस्थस्तमारभ्य गणिताः सप्तपुरुषाः सपिण्डा ऊर्ध्वं समानोदकाः स्त्रीषु सापिण्ड्यं त्रिपुरुषमेवाप्रत्तासु स्त्रीजन्ममरणे त्रिपुरुषमेवाशौचं पुरुषजन्ममरणे सप्तपुरुषविषयज्ञातीनामिति । अत्र कूटस्थस्थानीयत्वात्कूटस्थभ्रातुरपि सूतकं भवति । तथा स्मृत्यन्तरे च– "आत्मपुत्रपितृभ्रातृपितृव्यास्त्रीप्रसूतके । दशरात्रेण शुध्यन्ति नान्येषां सूतकं भवेत्" आत्मशब्देन जनक उच्यते । तेन पुत्रादयः प्रत्येकमभिसम्बध्यन्ते । सङ्ग्रहे च– 'कन्यकाजनने भ्रातृपितृतद्भ्रातृतत्सुताः । पितामहश्च तद्भ्राता शुध्यन्ति दशरात्रितः' ब्राह्मे पुराणे च– 'सपिण्डभ्रातृकन्यानां सपिण्डानां त्रिपूरुषी' वसिष्ठोऽपि– 'अप्रत्तानां तु स्त्रीणां सापिण्ड्यं त्रिपुरुषं विज्ञायते' शङ्खश्च– 'पुत्राणामसवर्णानामप्रत्तानां च योषिताम् । सपिण्डता विनिर्दिष्टा पितृपक्षे त्रिपूरुषी' पितृपक्ष इति मातृपक्षस्याप्युपलक्षणम् । सापिण्ड्यस्योभयत्रापि तुल्यत्वाद् आशौचवैषम्याभावाच्च । पुरुषविषये पुराणे– 'सर्वेषामेव वर्णानां विज्ञेया सप्तपूरुषी । सपिण्डता ततः पश्चात्समानोदकधर्मता' मनुरपि– 'सपिण्डता तु पुरुषे सप्तमे विनिवर्तते' सप्तमे पुरुषे अतिक्रान्ते तदूर्ध्वं सपिण्डता निवर्तत इत्यर्थः । तथा याज्ञवल्क्यः– 'पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा' इति । एतच्च कन्याविषये पञ्चमपर्यन्तं सापिण्ड्यप्रतिपादनं विवाहनिषेधार्थम् । आशौचविषये तु त्रिपुरुषमेव कन्यासापिण्ड्यम् । बोधायनश्च– 'सपिण्डतात्वात्सप्तमात्'



शङ्खश्च– "सपिण्डता तु सर्वेषां गोत्रतः सप्तपूरुषी" स्मृत्यन्तरे च– 'ऊर्ध्वं पञ्चसु पित्रादिष्वधः पुत्रादिपञ्चसु । स्मृतं सजातिसापिण्ड्यमेतत्सन्ततिजेष्वपि' अत्र दातृकूटस्थव्यतिरेकेण पञ्चसु सापिण्ड्यस्मरणं वेदितव्यम् । ततश्च ताभ्यां सह सप्तपुरुषमित्यविरोधः । पारस्करश्च–

"आ सप्तमात्सापिण्ड्यमा दशमात्समानोदकत्वम्"

**समानोदकत्वम्**

इदं दशमपर्यन्तं समानोदकत्वस्मरणं विदेशस्थविषयम् । 'समानोदकभावस्त्वनुवर्तेताचतुर्दशात् । जन्म*नाम्नोः स्मृतेरेके तत्परं गोत्रमुच्यते' इति व्यासे । मनूक्तं तु अभिहितदेशवर्तिषु चतुर्दशपुरुषादूर्ध्वमपि स्नेहोपलालनादिद्वारा जन्मनामावेदनेऽपि समानोदकत्वनिवृत्तिपरम् । येषु बन्धुत्वपरिपालनाद्यभावेन जन्मनामवेदनाद्यभावस्तेषूक्तपुरुषादर्वागपि समानोदकत्वनिवृत्तिर्वेदितव्या । तथा मनुः– 'समानोदकभावस्तु जन्मनाम्नोरवेदने' वसिष्ठोऽपि– 'सर्वे ज्ञातयोऽभ्युपयन्ति । आ सप्तमादा दशमाच्च समानग्रामवासे यावत्सम्बन्धमनुस्मरेयुः । एकवस्त्राः प्राचीनावीतिनः सव्यानामिकया अपनः शोशुचदघमिति दक्षिणाभिमुखा निमज्जन्ति प्रेतायोदकं सकृत् प्रसिञ्चन्त्यञ्जलिनाऽसावेतत्ते' इति । समानग्रामवासे सम्बन्धस्मरणेऽपि मनुवचनाच्चतुर्दशपुरुषपर्यन्तमेव समानोदकत्वं मन्तव्यम् ॥ १७ ॥

अथ परिभाषामाह– ॥ अतः परं प्रवक्ष्यामीति ॥ स्पष्टोऽर्थः । यद्यपि सोदकादेरप्यघमुत्तरत्रोच्यते । तथाप्यस्त्येवेदमघमित्यनिर्दिष्ट-

---

* जन्म च नाम च जन्मनामनी । तयोः स्मरणं यावत् तावत्समानोदकभाव इत्येके मन्यन्ते ।

**अतः परं प्रवक्ष्यामि सपिण्डानामघं स्फुटम् ।**
**जन्महान्योस्तु वर्णानां दश षोडश विंशतिः ॥ १८ ॥**

विषयं यद्वचनं तत्पितृभ्रातॄणां तदा पूर्णाशौचित्वात्तद्व्यतिरिक्तसपिण्ड-विषयमिति ज्ञापनार्थमियं प्रतिज्ञा ॥ तत्तद्वर्णापेक्षया आशौचदिनपरिमाणमाह ॥ जन्महान्योस्त्विति ॥ तुशब्दोऽवसङ्कोचनिवर्तकः । इतिशब्दः प्रकारवाची । अनेकर्षीत्यनेनोक्ताशौचप्रकारप्रमाणं संसूच्यते । हानिर्मरणम् । तत्र दशाहविधिरुपनीतविषयः । अनुपनीतमृतिविषये पितृभ्रातृव्यतिरिक्तसपिण्डस्याशौचवैषम्यस्य वक्ष्यमाणत्वात् । अत्र पैठीनसिः— 'आशौचमनुक्रमिष्यामो ब्राह्मणस्य दशरात्रमाशौचं षोडशरात्रं क्षत्रियस्य विंशतिरात्रं वैश्यस्य मासं शूद्रस्य' हारीतश्च— ''ब्राह्मणे दशरात्रं स्यात्क्षत्रिये षोडश स्मृताः । वैश्ये विंशतिरात्रः स्यान्मासं शूद्रे च श्रूयते'' वसिष्ठश्च— 'पञ्चदशरात्रेण राजन्यो विंशतिरात्रेण वैश्य'इति । अनेकर्षिसम्मतमिति क्षत्रियादिविषये प्रकारान्तरं च द्योत्यते । मनुः— 'शुध्येद्विप्रो दशाहेन द्वादशाहेन भूमिपः । वैश्यः पञ्चदशाहेन शूद्रो मासेन शुध्यति' संवर्तश्च— 'क्षत्रियो द्वादशाहेन वैश्यः पञ्चदशेन तु' याज्ञवल्क्यः— 'क्षत्रस्य द्वादशाहानि विशः पञ्चदशैव तु' अयं च द्वादशाहविधिरभिषिक्तक्षत्रियविषयः । पञ्चदशाहस्मरणं च गोरक्षादिसक्तवैश्यविषयम् । सदा शूद्रस्य मासमेव । सङ्करजानां शूद्रेष्वन्तर्भावात् । तेषां शूद्रवदाशौचम् । तथा मनुः— ''शूद्राणां तु सधर्माणः सर्वेऽपध्वंसजाः स्मृताः'' ब्राह्मपुराणे च— 'शावाशौचं प्रकुर्वन्ति

**विप्रादिवर्णाशौचम्**



**त्रिंशत्त्रिंशाः क्रमेणाघमित्यनेकर्षिसम्मतम् ।**
**मुख्यकर्तुरघं तावद्यावत्प्रेतविमोचनम् ॥ १९ ॥**

शूद्रवद्वर्णसङ्कराः' प्रतिलोमानां चाशौचाभाव एव । तथा हारीतः— 'न शूद्रप्रतिलोमानामाशौचं वास्ति किञ्चन' जाबालिश्च— 'नृपतेः षोडशाहानि विशां विंशत्यहानि तु । मासं शूद्रस्य शेषाणां सदाशौचमिति स्थितम् ॥ तथापि मरणे तेषां स्नानमात्रं विधीयते' विज्ञानेश्वरे च— 'प्रतिलोमा धर्महीना' इति ॥ श्रीः ॥ उक्तापवादमाह सार्धश्लोकत्रयेण— ॥ मुख्यकर्तुरिति ॥ ''पुत्राभावे तु पत्नी स्यात् पत्न्यभावे तु सोदरः । पुत्रः कुर्यात्पितृश्राद्धं पत्नी च तदसन्निधौ ॥ धनहार्यथ दौहित्रस्ततो भ्राता च तत्सुतः'' ''पुत्राभावे यः प्रत्यासन्नः सपिण्ड'' इत्यादिवचनैः पूर्वपूर्वाभावे प्रेतकर्मस्वधिकृतस्य मुख्यकर्तुस्तावदघं स्याद् यावत्प्रेतविमोचनम् । सपिण्डीकरणं कुर्यात् मुख्यकर्तरि ज्येष्ठपुत्रे स्थितेऽपि भ्रातॄणामपि सपिण्डीकरणान्तमघं भवति । अत्राघशब्द आशौचमात्रवाचकः । सूतकस्यासम्भवात् । एवमुत्तरत्रापि ज्ञेयम् । अत्र मुख्यकर्तुः दशाहात्परमपि अघविधानं सूतिकाया इव कर्मानर्हत्वमात्राभिप्रायकम् । तथा स्मृतिः— 'अकृत्वा प्रेतकार्याणि नित्यनैमित्तिकान्यपि । न कुर्यात् तावदाशौचं यावत्प्रेतस्य मोक्षणम्' प्रेतमोक्षणं सपिण्डीकरणम् । 'दाहादिविधिवत्कृत्वा सपिण्डीकरणे कृते । पितृत्वमश्नुते प्रेतः प्रेतत्वं च विमुञ्चति ॥ श्राद्धानि क्रमशो लब्ध्वा सपिण्डीकरणे कृते । प्रेतभावाद्विनिर्मुक्तः स्वकर्मफलभाग्भवेत्' इत्यादिस्मृतेः । सङ्ग्रहे च— 'अकृते

**मुख्यकर्तृनिर्णयः**

प्रेतकार्ये तु न कुर्यादात्मनः शुभम् । कुर्यादेव शुभं कर्म मुख्यकर्तुश्च सन्निधौ ॥ सपिण्डीकरणश्राद्धमकृत्वा शुभकर्मकृत् । ध्रुवमाप्नोति नरकं सपिण्डानां मृतौ क्रमात्' इति । अनेन मुख्यकर्तृव्यतिरिक्तज्ञातीनां दशाहात्परं प्रेतकार्याकरणेऽपि शुभकर्म कार्यमित्यवगम्यते । 'पुत्रैः पित्रोस्तु संस्कारः प्रमादादकृतो यदि । ज्ञातीनां दशरात्रं स्यात्तदूर्ध्वं सूतकं न हि ॥ नित्यकर्माणि कुर्वीत स्मृत्युक्तानि तथैव च । वंशजानामसंस्कारे सूतकं तु कथं भवेत् ॥ दशाहात्परतः शुद्धिर्ज्ञातीनां च विशेषतः' इत्यादिवचनात् । किञ्च, यस्तु पुत्रदौहित्रव्यतिरिक्तो ज्ञातिः संस्करोति तद्विषये विशेषः स्मृत्यन्तरे दर्शितः— "गर्भादिप्राशनान्तानि प्राप्तकालं न लङ्घयेत् । ज्ञातीनां प्रेतकार्याणि अकुर्वन्नपि कारयेत्" इति । पुत्रदौहित्रयोस्तु मातृपितृमातामहवर्गाणामभ्युदयोद्देश्यत्वेन तेषां प्रेतकार्याकरणे शुभकर्मानुपपत्तेः । अत एव स्मृत्यन्तरे— 'पित्रादीनां प्रमीतानां त्रयाणां तु सपिण्डनम् । कृत्वा तु मङ्गलं कार्यं नेतरेषां कथञ्चने'ति । आदिशब्देन मातृमातामहवर्गपरिग्रहः । यत्त्विदं वचनम्— 'सपिण्डीकरणात्पूर्वं शोभनं न विधीयते । यदि चैतत्कृतं कर्म कर्तृनाशाय कल्पते' इति तन्मात्रादिवर्गत्रयविषयम् । यदा पुत्राद्यभावे भ्रात्रादिः करोति तद्विषयं वा । तथा चतुर्विंशतिमतेऽपि— 'भ्राता वा भ्रातृपुत्रो वा सपिण्डः शिष्य एव वा । सपिण्डीकरणं कृत्वा कुर्यादभ्युदयं ततः' देवलोऽपि— 'पितरौ प्रमितौ यस्य देहस्तस्याशुचिर्भवेत् । न दैवं नापि पित्र्यं च यावत्पूर्णो न वत्सरः ॥

**प्रेतकर्माकरणेऽपि शुभकर्माधिकारः**



**पुत्राणामप्यघं तावन्मुख्यकर्तर्यपि स्थिते ।**
**शिष्यश्च दासभृतकौ स्वसपिण्डात्ययादिके ॥ २० ॥**

स्नानं चैव महादानं स्वाध्यायश्चाग्निपूजनम्' एतच्च वत्सरान्तसपिण्डीकरणाभिप्रायम् । 'न दैवं नापि पित्र्य'मिति पार्वणनिषेधः । सपिण्डीकरणात्पूर्वमेकोद्दिष्टस्यैव विधानात् । स्नानं समावर्तनम् । महादानं प्रसिद्धम् । स्वाध्याय उपनयनम् । अग्निपूजनमग्न्याधानादि । एतत्सर्वं द्वादशाहादौ सपिण्डीकरणे कृते 'सपिण्डीकरणं कृत्वा कुर्यादभ्युदयं ततः' इति तदनन्तरं कर्माधिकारस्मरणाद्वत्सरादर्वागपि कार्यमेव । तथा शाट्यायनिः— 'प्रेतश्राद्धानि शिष्टानि सपिण्डीकरणं तथा । अपकृष्यापि कुर्वीत कर्ता नान्दीमुखे द्विजः' गालवोऽपि— "सपिण्डीकरणात्प्रेते पैतृकं पदमास्थिते । आहिताग्नेः सिनीवाल्यां पितृयज्ञः प्रवर्तते" अतो दर्शादिश्राद्धं सपिण्डीकरणात प्राङ्नास्त्येव । "नासपिण्डीकृते प्रेते पितृकार्यं प्रवर्तते । सपिण्डीकरणं कृत्वा कुर्यात्पित्र्यं शुभानि चे"ति स्मृतेः । एतच्च सपिण्डीकरणं ज्येष्ठेनैव कार्यम् । 'सर्वैरनुमितिं कृत्वा ज्येष्ठेनैव तु यत्कृतम् । द्रव्येण चाविभक्तेन सर्वैरेव कृतं भवेत्' इति वचनात् । "ज्येष्ठपुत्रे तु दूरस्थे कनिष्ठाद्या यथोदितम् । कुर्युः पित्रोस्तु संस्कारं सपिण्डीकरणं न तु" इति ज्येष्ठस्यैव सपिण्डीकरणाधिकारस्मरणाच्च । कनिष्ठकृते तु प्रेतत्वविमोचनं नास्त्येव 'ज्येष्ठपुत्रस्य सद्भावे कनिष्ठः कुरुते क्रियाम् । प्रेतत्वान्न विमुच्येत पितृत्वं च न गच्छती'ति स्मरणात् । अनेन "सपिण्डीकरणं पित्रोर्न कार्यमखिलैः

**सपिण्डीकरण कर्तृनिर्णयः**

गुरुस्वामिसमाशौचा यदि तत्कुलवासिनः ।
मासार्धं वैष्णवे शूद्रे दासदास्योश्च शार्ङ्गिणः ॥ २१ ॥

सुतैः । एकेनापि कृते सम्यक्पुत्रत्वगुणसम्भवात्" इत्यादिष्वेकशब्दस्य ज्येष्ठपरत्वं व्याख्येयम् । तस्यैव पुत्रत्वगुणयोगात् । तथा मनुः— 'यस्मिन्नृणं सन्नयति येन चानन्त्यमश्नुते । स एव धर्मजः पुत्रः कामजानितरान्विदुः' ननु, विज्ञानेश्वरे– "एतच्च प्रेतश्राद्धसहितं सपिण्डीकरणं संविभक्तधनेष्वपि एकेनैव कार्यं न सर्वैः' 'नवश्राद्धं सपिण्डत्वं श्राद्धान्यपि च षोडश । एकेनैव तु कार्याणि संविभक्तधनेष्वपी'ति वचना"दित्युक्तम् । अतः कथमेवं व्याख्यानम्? मैवम्, 'एकमाण्डेन

**ज्येष्ठस्य पुनः करणविधिः**

पचतां पितृदेवार्चनादिकम् । एकं भवेद्विभक्तानां तदेव स्याद्गृहे गृहे' इति वचनेन प्रत्येककार्यत्वस्य प्रसक्तावस्यं वचनस्य तदपवादकत्वात्कनिष्ठकृतस्यापि सपिण्डीकरणस्याकृतत्वेन "कनिष्ठेनापि कर्तव्याः पित्रोः पिण्डोदकक्रियाः । ज्येष्ठेनापि च कर्तव्यं सपिण्डीकरणं पुनः ॥ यवीयसा कृतं कर्म प्रेतशब्दं विहाय तु । तदग्रजेन कर्तव्यं सपिण्डीकरणं पुन"रिति पुनःकरणविधानाच्च तथैव व्याख्येयम् । एतत्सर्वं विश्वादर्शे स्पष्टं द्रष्टव्यम् । किञ्च, ज्येष्ठस्यापत्नीकत्वे कनिष्ठ एव कुर्यात् तस्य साग्निकत्वात् । तथा पैठीनसिः– 'सपिण्डीकरणं पुत्रः पितुः कुर्वीत योऽग्निमान् । अनग्निस्तु क्रिया नान्यामेकोदिष्टमृते क्वचित्' स्मृत्यन्तरे च– "ज्येष्ठपुत्रोऽनग्निमान् स्यात्कनिष्ठस्त्वग्निमान् यदि । कनिष्ठ एव कुर्वीत सपिण्डीकरणं पितुः" किञ्च, सर्वस्यापि



पुत्रस्यानग्निकत्वे ब्रह्मचारित्वे वा ज्येष्ठ एव लौकिकाग्नौ कुर्यात् । 'सपिण्डीकरणं कुर्यात्स्मार्ताग्नौ तु विचक्षणः । अभावे लौकिके ह्यग्नौ सर्वं सम्पादयेद्बुध' इति वचनात् ॥ श्रीः ॥ ॥ शिष्यश्चेति ॥ आदिशब्देन जननमुच्यते । शिष्यशब्देन अन्तेवासी । एते शिष्यादयः स्वसपिण्डस्य जनने मरणे च गुरुस्वामिसमाशौचा भवन्ति यदि ते गुरुकुलवासिनः स्युः । अन्यत्र वासिनस्तु स्वजात्युक्ताशौचा इति चकारार्थः । अत्र बृहस्पतिः– "दासान्तेवासिभृतकाः शिष्याश्चैवात्रवासिनः । स्वामितुल्येन शौचेन शुध्यन्ति मृतसूतके" अत्रवासिनो गुरुकुलवासिनः । मृतसूतक इत्येकवद्भावः । अङ्गिराश्च– "दासीदास्यश्च शिष्याश्च यस्य वर्णस्य यो भवेत् । तत्तद्वर्णस्य शौचं स्याद्दास्यां मासं तु सूतकम्" स्मृत्यन्तरे च– 'मृते जाते च दासानां पत्नीनां चानुलोमतः । स्वामितुल्यं भवेच्छौचं मृते स्वामिनि यौतकम्' यौतकं त्रिजात्यघम् । दासादेर्लक्षणमाह नारदः–

**दासादि लक्षणम्**

'गृहे जातस्तथा क्रीतो लब्धो दायादुपागतः । आपत्कालभृतस्तद्वदाहितः स्वामिना च यः ॥ ऋणाच्च मोक्षितो यस्तु युद्धप्राप्तः पणे जितः । तवाहमित्युपगतः प्रव्रज्यावसितः कृतः ॥ भक्तदासश्च विज्ञेयस्तथैव वडवाभृतः* । विक्रेता चात्मनः शास्त्रे दासाः पञ्चदश स्मृताः ॥ स्वशिल्पमिच्छन्नाहर्तुं बान्धवानामनुज्ञया । आचार्यस्य वसेदन्ते कालं कृत्वा सुनिश्चितम् ॥ विज्ञानमुच्यते शिल्पं हेमरूप्यादिसंस्कृतिः ।

* वडवा दासी ।

रत्नादिकं च तच्छिक्षा कर्म कुर्याद्गुरोर्भृते ॥ भृतकस्त्रिविधो ज्ञेय उत्तमो मध्यमोऽधमः । उत्तमस्त्वायुधी यः स्यान्मध्यमस्तु कृषीवलः ॥ अधमो भारवाही स्यादित्येवं त्रिविधो भृतः' अत्र विशेषो ब्राह्मे पुराणे दर्शितः– 'गर्भदासस्तु यो यस्य स तस्य मृतसूतके । समाप्ते शुद्धः स्पृश्यः स्यादन्येषामपि सर्वदा ॥ आशौचे स्वे निवृत्ते तु भक्तदासोऽपि शुद्ध्यति । यस्मात्स्वातिशयः स्वामी यथा कर्मचरस्सदा' अयमर्थः, गर्भदासादयो भक्तदासान्ता द्वादश दासाः स्वामिना सह वर्तमानाः अन्यत्र वर्तमानाश्च स्वसपिण्डजन्मादौ स्वजात्युक्तकालत इति । शूद्रे विशेषमाह ॥ **मासार्धमिति** ॥ अतिरोहितार्थमेतत् । तथा वैकुण्ठमार्गसंशुद्धौ– 'चक्राङ्किताश्च ये शूद्रा वैष्णवा गतकल्मषाः । आशौचे त्वर्धमासेन शुद्धिस्तेषां विधीयते' अर्धमासं पञ्चदशदिनानि । अनेनाभिप्रायेण याज्ञवल्क्यश्च– 'त्रिंशद्दिनानि शूद्रस्य तदर्धं न्यायवर्तिनः' न्यायवर्तिनो विप्रदासस्य शुश्रूषादिगुणवतः । चक्राङ्किता इत्यत्र लिङ्गस्याविवक्षितत्वाच्चक्राङ्कितत्वादिलक्षणयोगाच्च । देवदास्या अप्ययमेवं ग्राह्यम् । तस्य राजवदाशौचमुक्तं ब्राह्मे पुराणे भगवता– 'पुरा देवासुरे युद्धे हतेषु शतशः सुरैः । दानवासुररक्षस्सु दैत्येषु च ततस्ततः ॥ तेषां नारीसहस्राणि शतशोऽथ सहस्रशः । परिणीतानि यानि स्युर्बलाद्भुक्तानि यानि च ॥ तानि सर्वाणि देवेशः प्रोवाच वदतां वरः । वेश्याधर्मेण वर्तध्वमधुना राजमन्दिरे ॥ वरारोहास्तथा देवगृहेषु च विशेषतः । राजानः स्वामिनस्तुभ्यमाशौचं चापि तत्समम् ॥

**भृत्यादिसूतकम्**



**युक्ता स्त्री च विजात्यूढा शुध्यते भर्तृकालतः ।**
**तत्पुत्राश्च मृते तस्मिन् मातृजात्युक्तकालतः ॥ २२ ॥**

भविष्यति च सौभाग्यं सर्वं च मयि भक्तितः' यत्तु, 'दास्या मासं तु सूतक'मित्यङ्गिरोवचनं तत्प्रतिलोमदासीविषयम् । "मृते जाते च दासानां पत्नीनां चानुलोमतः । स्वामितुल्यं भवेच्छौच"मित्यनुलोमदास्याः स्वामितुल्याशौचस्मरणात् । अयं च शूद्रेऽर्धमासविधिर्विप्रदास्या विष्णुपरायणत्वादियोगे । तथा च विष्णुधर्मोत्तरे– 'चक्राङ्किताश्च ये शूद्रा मद्भक्ता मत्परायणाः । तेषां विप्रस्य दासानामाशौचं चार्धमासकम्' इति । अन्यथा मासमेव । 'शूद्राणामपि भक्तानां क्षत्रियाणां विशामपि । देवकार्याभियुक्तानां नास्त्येवाशौचलाघवम्' इति वचनाच्चक्राङ्कनादिरहितानां केवलं भक्तानां शूद्रादीनां देवकार्याभियुक्तत्वमात्रेणार्धमासादिरूपाशौचं न भवतीत्यर्थः । अनेनैवाभिप्रायेण गौतमश्च– 'अर्धमासमेकमासं शूद्रस्ये'ति ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥

॥ **युक्ता स्त्री चेति** ॥ युक्ता द्रव्याद्युपाधिना स्त्रीत्वे संयोजिता पराश्रयेति यावत् । सा यस्य वर्णस्य भार्या स्यात्तद्वर्णोक्तेन भर्तृकालेन स्वसपिण्डमरणादौ शुद्ध्यति । एवं तस्या युक्तायाः पुत्राश्च भर्तरि मृते तु सा च ते च सर्वेऽपि मातृजात्युक्तकालतः शुद्ध्यन्ति । चशब्देनानुलोमपुत्रविषये मातृजात्युक्ताशौचम्, प्रतिलोमपुत्रविषये पितृजात्युक्ताशौचं च समुच्चीयते । अत्र विष्णुः– 'पत्नीनां दासानां चानुलोम्येन स्वामितुल्यमाशौचं मृते स्वामिन्यात्मीयम्' आनुलोम्येनेत्युक्तत्वाद्धीनवर्णयुक्त-

**अनुलोमाशौचम्**

न कर्तव्यं न कर्तव्यमघसङ्कोचनं कलौ ।
क्रमाशौचं गुणाशौचं निरस्यं दूरतः कलौ ॥ २३ ॥

भार्याविषये विशेषोऽस्ति । तथा शङ्खः— 'हीनवर्णात्तु या नारी प्रमादात्प्रसवं व्रजेत् । प्रसवे मरणे भर्तुराशौचं नोपशाम्यति' भर्तृजात्युक्ताशौचं भर्तुरूर्ध्वमपि न शाम्यति । अनुलोमपुत्रविषये विशेषमाहापस्तम्बः— 'क्षत्रविट्शूद्रजातानां पुत्राणां मृतसूतके । तेषां तु पैतृकी शुद्धिः विभक्तानां तु मातृकी' अङ्गिराश्च— 'असवर्णास्त्रियः पुत्रा द्विजानां परिकीर्तिताः । शूद्रापुत्रः पारशवो ब्राह्मणोत्पादितस्तु यः ॥ शूद्राचारेण तस्यापि शौचाशौचं विधीयते' आपस्तम्बश्च— 'सर्वेषामनुलोमानामाशौचं मातृवंशवत् । पैतृकं प्रतिलोमानामाशौचं सद्भिरिष्यते' ॥ २२ ॥

**कलावघसङ्कोचाभावः** कलावघसङ्कोचो न कर्तव्य इत्युद्घोषयति ॥ न कर्तव्यमिति ॥ 'क्षत्रियस्तु दशाहेन स्वकर्मनिरतः शुचिः' 'एकादशरात्रं क्षत्रियस्य द्वादशरात्रं वैश्यस्य' 'कन्यामृतौ सोदरस्य दशाहं त्वष्टमात्परम् । त्रिवत्सरात् त्रिरात्रं स्यादेकाहं नामकारणात् ॥ सोदराणां दशाहं तु स्त्रीमृतावष्टमात्परम् । चौलादूर्ध्वं त्रिरात्रं स्यान्नामतोऽर्ध्वं द्व्यहं स्मृतम्' इत्यादीनि पुराणगौतममाण्डव्याङ्गिरोमुख्यमुनिमुखरितानि वचनानि सन्ति । तथा स्त्रीजनने पितृव्यपुत्रभिन्नोदरभ्रातृपुत्रादेरप्याशौचाभावप्रतिपादकानि लोकस्मृतिविरुद्धानि अदृष्टमूलानि कानिचिद्वृथावाक्यानि केचित्स्मृत्यनभिज्ञाः पठन्ति । तथान्तर्दशाहे जातमृते सपिण्डानां



सूतकाभावमनाघ्रातस्मृतिगन्धा अन्ये मन्यन्ते तदेतत्सर्वं स्वल्पकल्पान्तरोक्तं कलौ न कर्तव्यमेव । अघसङ्कोचाकरणदृढीकरणार्थमेव वीप्सा । अत्र हारीतः— 'दशाह एव विप्रस्य सपिण्डमरणे सति । कल्पान्तराणि कुर्वाणः कलौ व्यामोहकिल्बिषी' स्मृतिचन्द्रिकायां च— 'वानप्रस्थाश्रमस्यापि प्रवेशो विधिचोदितः । वृत्तं स्वाध्यायसापेक्षमघसङ्कोचनं तथा ॥ एतानि लोकगुप्त्यर्थं कलेरादौ महात्मभिः । निवर्तितानि सर्वाणि व्यवस्थापूर्वकं बुधैः' स्मृत्यर्थसारे च— 'असवर्णासु कन्यासु विवाहश्च द्विजातिषु । वृत्तं स्वाध्यायसापेक्षमघसङ्कोचनं तथा ॥ अस्थिसञ्चयनादूर्ध्वमङ्गस्पर्शनमेव च । कलौ युगे त्विमान् धर्मान्विवर्ज्यानाहुर्मनीषिणः' एवमेव 'चतुर्थे दशरात्रं स्यात् षण्निशाः पुंसि पञ्चमे । षष्ठे चतुरहाच्छुद्धिः सप्तमे त्वहरेव तु' शङ्खोक्तक्रमाशौचं च,

**गुणाशौच निषेधः** 'एकाहाच्छुध्यते विप्रो योऽग्निवेदसमन्वितः । त्र्यहात् केवलवेदस्तु निर्गुणो दशभिर्दिनैः ॥ त्रिरात्रेण विशुध्येत विप्रो वेदाग्निसंयुतः । पञ्चाहेनाग्निहीनस्तु दशाहाद्ब्राह्मणब्रुवः* ॥ एतज्ज्ञात्वा तु मेधावी जपहोमान् करोति यः । न भवेत्सूतकं तस्य मृतकं च न विद्यते' इति पराशरबृहस्पतिब्रह्मादिभिरभिहितमिदं गुणाशौचं च, द्वयमपि कलौ नानुष्ठेयमेव । कुतः? 'दशाहं शावमाशौचं सपिण्डेषु विधीयते । जननेऽप्येवमेवं स्यान्निपुणां शुद्धिमिच्छताम्' 'शावाशौचं दशरात्रं जननेऽप्येवम्' ''दशरात्रमतः

* ब्राह्मणब्रुवश्चतुर्विंशन्मते दर्शितः— ''गर्भाधानादिसंस्कारैः वेदोपनयनैर्वृतः । नाध्यापयति नाधीते स भवेद्ब्राह्मणब्रुवः'' इति ।

परम्" "दशाहाच्छुध्यते विप्रो जन्महान्योः स्वयोनिषु" "आशौच-
मनुक्रमिष्यामो ब्राह्मणस्य दशरात्रम्" "दशाहमेव
विप्रस्य" 'विप्रो दशाहमासीत' 'सपिण्डेष्वादशाह-
माशौच'मिति । "जननमरणयोरधिकृत्य वदन्ति"
इत्यादिभिः सपिण्डत्वमात्रावलम्बनेन विप्रादेः पूर्णा-

**दशाहसूतकनिर्णयः**

शौचविधायिभिरनाघ्रातविशेषैर्मनुगौतमयाज्ञवल्क्यहारीतपैठीनसिसंवर्त-
बोधायनादिपरश्शतवचनैर्विरोधाद्विज्ञानेश्वरादिभिर्दूषितत्वाच्च । तथा वि-
ज्ञानेश्वरे पराशरः– "क्षत्रियस्तु दशाहेन स्वकर्मनिरतः शुचिः । तथैव
द्वादशाहेन वैश्यः शुद्धिमवाप्नुयात्' शातातपश्च– 'एकादशाहाद्राजन्यो
वैश्यो द्वादशभिस्तथा । शूद्रो विंशतिरात्रेण शुध्यते मृतसूतके' अङ्गि-
राश्च– 'सर्वेषामेव वर्णानां सूतके मृतके तथा । दशाहाच्छुद्धिरथ वा
इति शातातपोऽब्रवीत्' इत्यादीनि लिखित्वा तेषां लोके समाचाराभा-
वान्नात्र व्यवस्था प्रदश्यते" इति वदता तेनाचाराभाव एव प्रतिपादितः
एतत्सर्वं पूर्णाशौचविधानवचनजातं निर्गुणविषयमिति चेन्मैवम् । हन्त
बालिश! मा वादीः । बहुवचनसङ्कोचदोषापत्तेः, 'द्वैधे बहूनां वचनम्'
इत्येकदेशिमतस्यैव निरस्यत्वाच्च । "यदि पत्न्यां प्रसूतायां द्विजः
सम्पर्कमिच्छति । सूतकं तु भवेत्तस्य यद्यपि स्यात् षडङ्गवित्" इति
पारस्करेण षडङ्गविदोऽपि भर्तुः सूतिकासम्पर्कमात्रेण सूतकस्मरणाच्च ।
साक्षात्सपिण्डजननमरणनिबन्धनाशौचं गुणवतामेव भवति नान्यस्य ।
तस्य वेदाग्निरहितत्वादिनानग्न्यादिष्वन्तर्भावेन सद्यः शौचविषयत्वात् ।
तथा च वक्ष्यते । तस्माद्गुणवत्त्वमघाभावे न प्रयोजकम् । किन्तु,



सापिण्ड्याभावः । तस्माद्बलवति सापिण्ड्ये जाग्रति सति केन वा
सपिण्डानामाशौचसङ्कोचः शक्यते वक्तुम्? ननु, 'न वर्धयेदघाहानि
प्रत्यूहेन्नाग्निषु क्रियाः' इति मनुस्मरणात्कथमघसङ्कोचो न कार्यः?
इति चेन्न । आशौचस्य क्रियापनोद्यत्वेन च यावत्प्रेतकर्माकरणं ताव-
न्मुख्यकर्तुराशौचस्याप्यनुवृत्तेः । प्रेतकार्याकरणे नाघाहानि वर्धयेत् ।
गार्हपत्यादिषु पिण्डपितृयज्ञादिकाः क्रियाः न विघ्नयेत्सपिण्डीकरणान-
न्तरमेव पिण्डपितृयज्ञादिकर्मप्रवृत्तेरिति तद्वचनार्थत्वात् । अघसन्निपाते
पश्चादागतमघं न वर्धयेत् । पूर्वाघेनैव उत्तराघं समापयेदिति तस्यार्थ-
माह भाट्टः । यत्तु, 'कुसूलधान्यको वा स्यात्कुम्भीधान्यक एव वा ।
त्र्याहिको वापि भवेदश्वस्तनिक एववे'ति प्रतिपादितं चतुर्विधगृह-
स्थाभिप्रायेण । "दशाहं शावमाशौचं सपिण्डेषु विधीयते । आवासं
चयनादस्थ्नां त्र्यहमेकाहमेव वे"ति कुसूलधान्यादीनां चतुर्णां क्रमेण
दशाहचतुरहत्र्यहैकाहाशौचं प्रतिपादितं मनुना । तदपि कलावश्वस्तनि-
कादेर्निषिद्धत्वात्कुम्भीधान्यादेरभावाच्च, भावे वा तदहर्मात्रपर्याप्तद्रव्य-
प्रतिग्रहे वृत्त्यभावनिबन्धनेन पूर्णाशौचिनोऽपि सद्यश्शौचविधानाच्च,
विप्रादेर्दशाहादिपूर्णाशौचमेव कलौ नाघसङ्कोच इति
न कश्चिद्विरोधः ॥ २३ ॥

**गर्भस्रावे आशौचम्**

॥ **स्रावाद्येवेति** ॥ स्रावो जलात्मकगर्भनिस्सरणम् ।
तदादि पितुः स्नानं स्यात् । एवकारो भिन्नक्रमः ।
स्रावादि पितुरेव स्नानं नान्यस्येति । अन्येषां पितृव्यतिरिक्तानां
तत्स्नानं पतनादि भवति । स्रावपातौ निर्वक्ति– ॥ **गर्भनाशश्चेति** ॥

**स्रावाद्येव पितुः स्नानमन्येषां पतनादि तत् ।**
**गर्भनाशश्चतुर्मासे स्रावः पातस्ततो द्वयोः ॥ २४ ॥**

चतुर्मास इति समाहारद्वन्द्वः । तेन चतुर्षु मासेषु यो गर्भनाशः स स्रावः । ततो द्वयोः पञ्चमषष्ठयोर्मासयोर्यो गर्भनाशः स पातः । तद्यथा स्मृत्यन्तरे– 'आ चतुर्थाद्भवेत्स्रावः पातः पञ्चमषष्ठयोः । अत ऊर्ध्वं प्रसूतिः स्याद्दशाहं सूतकं भवेत्' तथा, ''गर्भस्रावे मासतुल्या रात्रयः स्त्रीणां स्नानमेव पुरुषस्य'' याज्ञवल्क्यश्च– 'मृते स्नानेन शुध्यन्ति गर्भस्रावेण गोत्रिणः' अत्र स्रावशब्देन पात उच्यते । स्रावे सपिण्डाशौचाभावात् । तथा च वक्ष्यते 'पाते सद्यस्तु कठिने त्र्यहं पित्रादिषु स्मृतम्' पाते द्रवात्मके ज्ञातीनां सद्यः स्नानं कठिने मांसले तु पाते पित्रादिषु त्र्यहमघं भवति । तथा ब्राह्मे पुराणे– 'सद्यः शौचं सपिण्डानां गर्भस्य पतने सती'ति । अत्राशौचप्रकरणे सद्यः शौचमित्युक्ते शावे सर्वत्र स्नानान्तमघं द्रष्टव्यम् । 'सद्यः शौचे तु तावत्स्यादाशौचं संस्थितस्य तु । यावत्स्नानं न कुर्वन्ति सचैलं बान्धवा बहि'रित्यङ्गिरस्स्मरणात् । कठिननिपातविषये वसिष्ठः– 'ऊनद्विवार्षिके प्रेते गर्भपतने वा सपिण्डानां त्रिरात्रम्' मरीचिश्च– 'स्रावे मातुस्त्रिरात्रं स्यात् सपिण्डाशौचवर्जितम् । पाते मातुर्यथामासं पित्रादीनां दिनत्रयम्' एतच्च त्र्यहविधानं सन्निधावेव, परोक्षे दिनविधानात् । तथा यमः– 'अदन्तजाते तनये शिशौ गर्भच्युते तथा । सपिण्डानां तु सर्वेषामहोरात्रमशौचकम्' ॥ २४ ॥ अत्र सप्तममासादिगर्भनाशे सपिण्डानां दशाहमाशौचमित्याह– ॥ **मृतजातेऽपीति** ॥ स्पष्टोऽर्थः । हारीतग्रहणं पूजार्थं न त्वनन्योक्तिप्रदर्शनार्थम् । अत एव बृहन्मनुपारस्करादिवचनान्युत्तरत्रोदाहरिष्यन्ते । एवमन्यत्रापि मनुगौतमादिग्रहणादिकं बोद्धव्यम् । अत्र हारीतः– 'जातमृते मृतजाते वा सपिण्डानां दशाह'मिति । विज्ञानेश्वरे च– ''अत्र सप्तममासप्रभृति मृतजाते जातमृते वा सपिण्डानां जनननिमित्तं परिपूर्णमाशौचम्'' स्मृत्यर्थसारे च– 'जातशिशुमरणे निष्प्राणशिशुनिर्गमने च जनननिमित्तमाशौचं यथावर्णं सर्वेषां सपिण्डानां सूतकमस्त्येवेति' वरदराजीयसङ्ग्रहे च– 'पातात्प्राक् पितुराप्लवस्त्रिदिवसस्तस्मिन् कठोरस्य चेज्ज्ञातेरप्यथ सप्तमादिषु पितृज्ञात्योर्दशाहं भवेत्' ॥ २५ ॥



**मृतजातेऽपि वा जातमृते वा पतनात्परम् ।**
**ज्ञातीनां सूतकं पूर्णमिति हारीतशासनम् ॥ २५ ॥**
**त्र्यहं मासत्रये मातुर्गर्भस्रावे ततः परम् ।**
**मासतुल्यान्यहान्यूर्ध्वं षण्मासात्सूतिकाविधिः ॥ २६ ॥**

**मृतजातजातमृतविषयः**

**मातृविषये पातविषये**

॥ **त्र्यहं मासेति** ॥ व्याख्याननिरपेक्षोयम् । षण्मासादिति पूर्ववत्समाहारद्वन्द्वः । 'पितरस्तस्य षण्मासम्' 'राष्ट्रान्तरे तु षण्मासम्' इत्यादिप्रयोगावशात् स्मृत्यन्तरानुसारित्वाच्चास्य नास्त्यतिप्रसङ्गः । अत्र याज्ञवल्क्यबृहस्पतिवसिष्ठाः– 'गर्भस्रावे मासतुल्या निशाः शुद्धेस्तु कारणम्' गौतमोऽपि– 'गर्भमाससमा रात्रिः स्रंसने गर्भस्य' पैङ्गलगृह्येऽपि– 'गर्भे पतिते तन्मासमहोरात्रमाशौचम्' ब्राह्मेऽपि– 'षण्मासाभ्यन्तरं

**चत्वारिंशद्दिनानि स्युर्जनन्याः स्त्रीप्रसूतके ।**
**त्रिंशत्पुम्प्रसवे ज्ञातेर्दशाहमुभयोरपि ॥ २७ ॥**

यावद्गर्भस्रावो भवेद्यदा । तदा माससमैस्तासां दिवसैः शुद्धिरिष्यते ॥ अत ऊर्ध्वं स्वजात्युक्तमाशौचं तासु विद्यते' अत्र पैङ्गलगृह्यब्रह्मपुराणवचनगतपतितस्रावशब्दौ गर्भप्रच्युतिमात्रपरौ । मन्वादिभिर्माससमरात्रिविधानं चतुर्थमासादिति वेदितव्यम् । तथा हारीतः– 'त्रिषु मासेषु गर्भस्य स्रावे मातुस्त्रिरात्रकम्' मरीचिरपि– 'स्रावे मातुस्त्रिरात्रं स्यात्सपिण्डाशौचवर्जनम्' किञ्च, गर्भसृत्यां 'यथामासमचिरे तूत्तमे त्र्यह'मिति मरीचिवचनादचिरशब्दस्य मासत्रयपरतया विज्ञानेश्वरादिभिर्व्याख्यातत्वाच्च । 'रात्रिभिर्मासतुल्याभिर्गर्भस्रावे विशुध्यती'ति मन्वादिवचनं मासत्रयादूर्ध्वमेव भवतीत्यर्थः ॥ २६ ॥

**जनने मातृ सूतकम्**

सूतिकाविधिमाह– ॥ **चत्वारिंशदिति** ॥ यद्यपि पूर्वमेव जन्महान्योरित्यनेन ज्ञातीनां दशाहादिविधिरुक्तः । तथापि, स्त्रीपुम्प्रसवयोरुभयोरपि भिन्नोदरभ्रातृपुत्रत्वाद्यनादरेणाघशेषे कन्यापुरुषसपिण्डानां परिपूर्णं सूतकमस्तीति दृढीकरणार्थं पुनरुक्तिरिति न दोषः । ज्ञातेरित्येकवचनं जात्यभिप्रायेण । अतो व्यक्त्यपेक्षया ज्ञातिशब्दवर्णने बहुवचनप्रयोगः कार्यः । ज्ञातिः सपिण्डः सनाभिर्बान्धवः सपक्ष इति पर्यायः । अत्र पैठीनसिः– 'सूतिकां पुत्रजननीं स्नातां विंशतिरात्रेण कर्माणि कारयेत् । मासेन स्त्रीजननम्' मासेनेति सावनाभिप्रायम् । 'सूतकादि-

**स्त्रीपुम्प्रसवे मातुराशौचम्**



परिच्छेदो दिनमासाब्दपास्तथा । मध्यमा दिनमुक्तिश्च सावनेनैव गृह्यते' इति ब्रह्मसिद्धान्ते निर्धारणात् । अतो जननदिनमारभ्य त्रिंशद्दिनानि मासः । मनुश्च– 'अशुद्धा बान्धवाः सर्वे सूतके च तथैव च' बान्धवास्सपिण्डाः । तथैव दशाहमित्यर्थः । बोधायनोऽपि– 'सपिण्डेष्वादशाहमाशौच'मिति । 'जननमरणयोरधिकृत्य वदन्ति' संवर्तकोऽपि– 'जातस्यापि विधिर्दृष्ट एष एव मनीषिभिः । दशरात्रेण शुध्येत वैश्वदेवविवर्जितः' इति संवर्तगौतमादिपूर्वोक्तवचनान्यप्यत्रानुसन्धेयानि । 'जननेऽप्येवमेवं स्या'दिति मन्वादिवचनेषु केवलं जननमात्रोल्लेखेन दशाहप्रतीतेर्न किञ्चित्कन्यासपिण्डानां सूतकवैषम्यमस्ति । ननु, सन्ति हि सूतिकाया दशाहाच्छुद्धिप्रतिपादकवचनानि । तथा शातातपः– 'सूतिका सर्ववर्णानां दशाहेन विशुध्यति । ऋतौ न च पृथक् शौचं सर्ववर्णेष्वयं विधिः' पारस्करश्च– 'द्विजातिसूतिका या स्यात्सा दशाहेन शुध्यति । त्रयोदशेऽह्नि सम्प्राप्ते शूद्रा शुध्यत्यसंशयः' संवर्तश्च–

"अजा गावो महिष्यश्च ब्राह्मणी च प्रसूतिका ।
दशरात्रेण शुध्यन्ति भूमिष्ठं च नवोदकम्" इति ।

**गोमहिष्यादिषु**

अतः कथं चत्वारिंशद्दिनान्यघम् ? इति चेन्न । दशाहात्परं सत्यपि सूतके शुद्ध्यभिधानं वाक्यश्रवणदर्शनादिविषयं न तु कर्मविषयम् । तत्र पैठीनसिना विशेषस्मरणात् । अतो दशाहात्परं सूतिकायाः कर्मानर्हत्वलक्षणमात्रमेव सूतकं न तु दशाहवदश्रोतव्यानिरीक्ष्यत्वादिलक्षणमित्यतो न विरोधः । यत्तु, 'ब्राह्मणी क्षत्रिया वैश्या प्रसूता दशभिर्दिनैः । शतैः शूद्रा च संस्पृश्या त्रयोदशभिरेव च' इति

**दशाहं दर्शनं वाक्यं सूतिकायास्त्यजेत्ततः ।**
**अधान्तं स्पर्शमेवेत्थं पितुस्तं यमलोद्भवे ॥ २८ ॥**

ब्राह्मपुराणवचनम् । तद्दशाहादेः परं कैमुतिकन्यायेन दर्शनवाक्यश्रवणदोषाभावप्रतिपादनपरम् । दशाहात्परं सूतिका स्पृश्या किल किमुत निरीक्ष्या वाक्यश्रवणयोग्या वेति । अत एतज्ज्ञायते 'सूतके सूतिकावर्जं संस्पर्शो न निषिध्यत' इति दशाहात्परमपि तस्या स्पर्शनिषेधस्मरणात् । एतच्चादशाहं वाक्यश्रवणवर्जनं भोजनादिविषयम् । 'चण्डालसूतिकोदक्यावाक्यं श्रुत्वा द्विजोत्तमः । भुक्त्वा तु ग्रासमात्रेण दिनमेकमभोजन'मित्यादिस्मृतेः ॥ २७ ॥

अत एव तद्वर्जनमाह– ॥ **दशाहमिति** ॥ दशाहं सूतिकाया दर्शनं वाक्यश्रवणं च वर्जयेत् । ततो दर्शनानन्तरं यावत्सूतकं तावत् स्पर्शमेव त्यजेत् । न तु दर्शनादि । इत्थं सूतकान्तं यमलोद्भवे अपत्यद्वयजनने जनकास्यापि संस्पर्शं त्यजेत् । तथा बोधायनः– "सूतकं मातुरेव स्यान्मातापित्रोस्तु सूतकम्' प्रसवे मातुरेवास्पृश्यत्वादिलक्षणं सूतकम् । युगपत्स्त्रीपुम्प्रसवे तु मातापित्रोरित्यर्थः । एवं व्याख्यातमखण्डादर्शे । याज्ञवल्क्यश्च– 'पित्रोस्तु सूतकं मातुस्तदसृग्दर्शनाद्ध्रुवम्' अस्पृश्यत्वादिलक्षणमिति विवृतं विज्ञानेश्वरे । व्याघ्रपादोऽपि– 'सूतकं तु सपिण्डानां पित्रोर्वा मातुरेव वा' मनुरपि– 'सूतकं मातुरेव स्यादुपस्पृश्य पिता शुचिः' वसिष्ठः– "मातापित्रोर्वा तन्निमित्तत्वादेषामपि स एवार्थः" यत्त्विदं वचनम्, 'पतितं सूतिकामन्त्यं शवं स्पृष्ट्वा च कामतः । स्नात्वा सचैलं स्पृष्ट्वाग्निं

**युग्मजनने**



**आ चौलात्सद्य आ दानात्त्रिशोर्ध्वं चा विवाहतः ।**
**त्र्यहं कन्यामृतौ ज्ञातेष्वघं पूर्णमृतूद्भवे ॥ २९ ॥**

घृतं प्राश्य विशुद्ध्यति' इति । तद्दशाहान्तस्सूतिकास्पर्शविषयम् । "सूतके सूतिकावर्जं संस्पर्शो न निषिध्यते । (संस्पर्शे सूतिकायास्तु स्नानमेव विधीयते" इति दशाहात्परं स्नानमात्रविधानात्) किञ्च, 'चण्डालं पतितं चैव सूतिकां च रजस्वलाम् । (दृष्ट्वा निरीक्षयेत्सूर्यं भाषणे द्विजभाषणम्' इत्याद्यपि दशाहान्तर्विषयमेव )। किञ्च, 'दिवाकीर्तिमुदक्यां च पतितं सूतिकां तथा । शवं तत्स्पृष्टिनं चैव स्पृष्ट्वा स्नानेन शुद्ध्यति ॥ चण्डालं पतितं श्वानमुदक्यां सूतिकां तथा । दृष्ट्वा भुक्त्यन्तरे स्नात्वा मानस्तोकेत्र्यृचं जपेत् ॥ सूतकाद्द्विगुणं शावं शावाद्द्विगुणमार्तवम् । आर्तवाद्द्विगुणं सूतिस्ततोऽपि शवदाहकः' इति देवलादिस्मृत्यन्तरविशेषवचनान्यन्वेषणीयानि । अस्माभिस्तु विस्तरभयादुपरम्यते ॥ २८ ॥

कन्याविषये ॥ **आ चौलादिति** ॥ अत्र आङ् मर्यादायाम् । चौलात्प्राक् कन्यामृतौ सद्यश्शौचम्, चौलादूर्ध्वं त्रिवर्षात्परं वाग्दानात्प्राग्दिनम्, वाग्दानादूर्ध्वं विवाहात्पूर्वं त्र्यहम्, तत्रैव रजःप्रादुर्भावे सति कन्यामृतौ पूर्णम् । 'दशाहादिज्ञातिषु' इति सर्वत्रानुषज्यते । अत्रापस्तम्बः– 'अप्रौढायां तु कन्यायां सद्यःशौचं विधीयते' अप्रौढा अकृतचौला । तथा वृद्धमनुः– 'अचूडायां तु कन्यायां सद्यः शौचं विधीयते । अहस्त्वदत्तकन्यासु वाग्दत्तासु त्र्यहं विदुः' याज्ञवल्क्यश्च– 'अहस्त्वदत्तकन्यास्वि'ति । आश्वलायनोऽपि– 'अप्रत्तासु च स्त्रीषु त्रिरात्र'मिति ।

**कन्यासूतकम्**

**त्रिरात्रं वरतज्ज्ञात्योर्दत्तानूढामृतावघम् ।**
**पूर्णं भ्रातुश्च पित्रोश्च कन्याबालमृतौ सदा ॥ ३० ॥**

शङ्खसंवर्तौ च– 'पितृवेश्मनि या नारी रजः पश्यत्यसंस्कृता । तस्यां मृतायां नाशौचं कदाचिदपि शाम्यति' स्वजात्युक्तपूर्णाशौचानुष्ठानमन्तरेण त्र्यहानुष्ठानमात्रेण दत्तानूढरजस्वलामरणाशौचं न विरमतीत्यर्थः । तथा च मनुः– "स्त्रीणामसंस्कृतानां तु त्र्यहाच्छुध्यन्ति बान्धवाः । यथोक्तेनैव कल्पेन शुध्यन्ति तु सनाभयः' बान्धवा वरादयः । ते त्र्यहाच्छुध्यन्ति सनाभयस्त्रिपुरुषान्तर्वर्तिनः सपिण्डास्तु यथोक्तेनैव कल्पेन स्वजात्युक्तदशाहादिविधिनेत्यर्थः । पुलस्त्यः– 'सद्यस्त्वप्रौढकन्यायां प्रौढायां वासरं भवेत् । प्रदत्तायां त्रिरात्रं स्याददत्तायां दिनं भवेत्' ब्राह्मेऽपि– "आ जन्मनस्तु चौलान्तं कन्या यत्र विपद्यते । सद्यः शौचं भवेत्तत्र सर्ववर्णेषु नित्यशः ॥ ततो वाग्दानपर्यन्तं यावदेकाहमेव हि । ततः परं प्रवृत्तायां त्रिरात्रमिति निश्चयः" एतच्च कन्यामृतौ त्र्यहादिविधानं पितृपक्षविषयम् । मातृपक्षे विवाहात्प्राक् सद्यः शौचस्य वक्ष्यमाणत्वात् । मरीचिः– 'चूडाया अकरणे सद्यः शौचं प्राग्दानादेकाहं दत्तानां प्राक् परिणयात् त्र्यह'मिति ॥ २९ ॥

**दत्तानूढा विषये**

दत्ताद्यघमाह ॥ **त्रिरात्रमिति** ॥ दत्ता च सानूढा च दत्तानूढा तस्या मृतौ वरस्य पितृपक्षसपिण्डानां च त्र्यहम् । अत्र सर्वत्र दशाहादूर्ध्वं कन्याबालमृतौ पित्रोर्भ्रातॄणां च सदा दशाहमघं भवति । ब्राह्मे पुराणे– 'वाग्दाने तु कृते तत्र ज्ञेयं चोभयतस्त्र्यहम् । पितुर्वरस्य च ततो दत्तानां



**कृते नामादिसंस्कारे प्राप्तकालेऽपि चाकृते ।**
**स्वकाले संस्कृते प्रेते यथा तद्वदिहाप्यघम् ॥ ३१ ॥**

भर्तुरेव हि ॥ स्वजात्युक्तमाशौचं स्यान्मृतके सूतके तथा' पितुर्वरस्य च उभयत उभयोः सपिण्डयोः । ततो दानानन्तरं दत्तानामूढानां भर्तुरित्युपलक्षणम् । भर्तृसपिण्डानां च स्वजात्युक्तमघं स्यादित्यर्थः । मरीचिरपि– 'वारिपूर्वं प्रदत्ता या या नैव प्रतिपादिता । असंस्कृता तु सा ज्ञेया त्रिरात्रमुभयोः स्मृतम्' उभयोर्वरादेः पित्रादेश्च । स्मृत्यर्थसारे च– 'दत्तानूढा च कन्या या संस्कार्या भर्तृगोत्रतः । उभयोर्वरयोश्चैव त्रिरात्रमघमिष्यते' मनुश्च– "स्त्रीणामसंस्कृतानां तु त्र्यहाच्छुध्यन्ति बान्धवाः" बान्धवा वरादयः । पुराणे च– 'अविशेषेण वर्णानामर्वाक् संस्कारकर्मणः । त्रिरात्रात्तु भवेच्छुद्धिः कन्यास्वपि विधीयते' व्याघ्रपादः– 'बाले मृते सपिण्डानां सद्यः शौचं विधीयते । दशाहेनैव दम्पत्योः सोदराणां तथैव च' अत्र सोदरशब्दोऽसोदरस्याप्युपलक्षकः । तथा पैङ्गलगृह्ये—

**बालमरणे**

'गर्भस्थे प्रेते मातुरेव स्यादाशौचं जात उभयोः कृते नाम्नि सोदराणामपि भिन्नोदराणामप्येवम्' अखण्डादर्शे– 'ज्ञातीनां स्नानमेव बालमरणे मातापितृभिन्नोदराणामपि दशाहमघं भवति । कन्यायां मृतायां पित्रोः सोदराणां भिन्नोदराणां च दशाहमाशौचं भवति' इति । गृह्ये स्मृतौ च– 'दशरात्रं दम्पती सूतकिनौ भवतः' इति ॥ ३० ॥

अत्र नामकरणादिसंस्काराणां कालपरत्वात्कालसंस्कारावलम्बनेन सद्यः शौचादिस्मरणाच्चाशौचं कालनिबन्धनं संस्कारनिबन्धनं

**कृते नामादिसंस्कारे प्राप्तकालेऽपि चाकृते ।**
**स्वकाले संस्कृते प्रेते यथा तद्वदिहाप्यघम् ॥ ३२ ॥**

चेत्याह ॥ **कृते नामादीति** ॥ अत्र यद्यपि, 'अहन्येकादशे नाम दशम्यामुत्थितायां स्नातायां पुत्रस्य नाम दधाति' 'जन्मनोऽथ षष्ठे मासि' 'षष्ठेऽन्नप्राशनं मासि' 'जन्मनोऽधितृतीये वर्षे चौलम्' 'तृतीयेऽब्दे शिशोश्चौलम्' 'गर्भाष्टमेषु ब्राह्मणमुपनयीत' ''गर्भाष्टमेऽष्टमे वाब्दे ब्राह्मणस्योपनायनम्'' इत्येकादशाहषष्ठमासतृतीयाष्टमवर्षेषु नामकरणान्नप्राशनचौलोपनयनविधिः । तथा हि, 'जन्मर्क्षाद्द्वादशाहे वा दशाहे वा विशेषतः । कुर्याद्वै नामकरणम्' 'दशमे नाम कुर्यात्तद्वादशे षोडशेऽह्नि वा । दशमेऽह्नि द्विजातीनां नामकर्म विधीयते' 'दशम्यां नामकरणम्' 'नामधेयं दशम्यां तु' इति मनुवसिष्ठशङ्खहारीतवचनकल्पावलम्बनेन दशाहे नामकरणे कृते । 'षष्ठेऽन्नप्राशनं जातेषु दन्तेषु वा' 'पञ्चाशद्दिवसात् त्रिघ्नात्पश्चान्निहतषष्ठिकात् । अर्वागेवोत्तमा भुक्तिर्मास्यन्येऽप्येवमूचिरे' इति लोकाक्षिबृहस्पतिवचनानुसारेण षष्ठमासात् प्राक्कृते चान्नप्राशने, 'चूडाकर्म द्विजातीनां सर्वेषामेव धर्मतः । प्रथमेऽब्दे तृतीये वा कर्तव्यं श्रुतिचोदना'दिति मनुयमादिवचनपरिग्रहणे त्रिवर्षात्प्रागेव चौले कृते नवमे पञ्चमे वा कार्यम् । 'पञ्चमे वा प्रचक्षते सप्तमे ब्रह्मवर्चसकाम' इति गौतमात्रेयापस्तम्बादिवचनानुसारेणाष्टवर्षादर्वागेव उपनयने कृते च सति एकादशाहादौ नामादिभिः संस्कृते बाले प्रेते यथा ज्ञातीनामघं भवति तथैव स्वकालात्पूर्वकालकृतसंस्कारे प्राप्तकालाकृतसंस्कारे च बाले मृतेऽपि ज्ञातीनामघं भवतीत्यर्थः । 'अजातदन्तमासैर्वा मासैः षड्भिर्मृते सति । ऊनद्विवार्षिके प्रेते सद्यः' ''नात्रिवर्षस्य कर्तव्या'' इत्यादिवचनैराशौचस्य कालपरत्वविधानात् । 'कृते नाम्नि सोदराणाम्- 'अप्रौढायां तु कन्यायां सद्यः' ''निवृत्तचौलकानां तु त्रिरात्रत्वादुपनीतस्य पूर्णाघम्'' इत्यादिवचनैः तस्य संस्कारनिबन्धनत्वस्मरणाच्च । तस्मादाशौचस्योभयनिबन्धनत्वं सिद्धम् । किञ्च, इदमत्र बोद्धव्यम् । ''गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनम् । कुमारस्याष्टमे वर्षे गर्भाधानादिवत्सरात्'' 'गर्भाष्टमेषु ब्राह्मण'मिति मनुवसिष्ठापस्तम्बादिवचनैः सर्वस्यापि विप्रस्य गृह्यभेदेऽपि गर्भाष्टमाब्दस्योपनयनमुख्यकालत्वावगतेः । सप्तमाब्दे अकृतोपनयने मृते सति सपिण्डानां पूर्णाशौचं भवतीति ॥ तथा ब्राह्मे पुराणे त्रिवर्षादूर्ध्वमविशेषेण त्र्यहाशौचमुक्त्वानन्तरमुक्तम्– 'द्विजन्मनामयं कालस्त्रयाणां तु षडाब्दिकः । पञ्चाब्दिकं तु शूद्राणां स्वजात्युक्तमतः पर'मिति । अतः परं शुद्धषष्ठाब्दादूर्ध्वं विप्रादेर्दशाहादिस्वजात्युक्तमघं भवतीत्यर्थः । तथा, 'जन्मनोऽधितृतीये वर्षे चौल'मित्यापस्तम्बस्मरणात् । आपस्तम्बिनां 'तृतीयेऽब्देऽकृतचौले मृते त्र्यहं भवती'ति । एवं स्वस्वगृह्योक्तकालाकृतचौले मृते तत्सपिण्डानां त्र्यहमिति ग्राह्यम् । किञ्च, 'विवाहस्त्वष्टवर्षायाः कन्यायास्तु प्रशस्यते' 'त्र्यष्टवर्षोऽष्टवर्षा'मित्यादिवचनैर्गर्भाष्टमाब्दस्य विवाहमुख्यकालत्वेऽवगतेऽपि 'आ चौलात्सद्य' इत्यादिना विशेषस्योक्तत्वात् । अनूढाया मृतौ पक्षिणीविधिरित्यलम् ॥ ३२ ॥

नामकरणादिकालः

उपनयनकालः

**चौलात्परं भवेद्दाहो नाम्नः प्राक्खननं परम् ।**
**दाहो वा खननं दन्तात्परं त्यागः स वाथ तत् ॥ ३३ ॥**

अत्र खननादिनिबन्धनाशौचवैषम्यविध्यौपाधिकखननादिसंस्कारभेदविधिमादौ शिक्षयति– ॥ **चौलात्परमिति** ॥ सर्वं वाक्यं सावधारणमिति परिभाषया खननदाहयोरेवकारोपश्लेषणादन्ययोगव्यवच्छेदो द्रष्टव्यः । चौलात् त्र्यब्दाद्वा परं मृतस्य शिशोर्दाह एव संस्कारः । नाम्न एकादशाहाद्वा प्राक्तस्य खननमेव संस्कारः । एकादशाहात् पश्चात्खननं वा दाहो वा विकल्पेन स्यात् । अयं च विकल्पो दन्तात् पूर्वमिति व्याख्येयम् । तत्परं संस्कारान्तरस्यापि वक्ष्यमाणत्वात् । 'उक्तस्यादिना पूर्वस्यावसानं विद्या'दिति न्यायाच्च दन्तजननात् षष्ठमासाद्वा परं त्यागो वा संस्कारः । स वेति पुल्लिङ्गनिर्देशाद्दाहो वा संस्कार इत्यर्थः । तथा पुराणे– 'संस्कारः कृतचौलस्य क्रियैकोद्दिष्टमस्य च । उपनीतस्य पूर्णाघं त्रिदिनं सोदकाय च' संस्कारशब्देन दाह एवोच्यते । "अग्निना संस्कृतस्योक्ता पिण्डदानोदकक्रिया । दाहाद्येवोदकं पिण्डं पञ्चमाब्दादिसञ्चय" इत्यादिवचनैरग्निना संस्कृतस्यैवोदकदानविधानात् । मनुरपि– 'नात्रिवर्षस्य कर्तव्या बान्धवैरुदकक्रिया । जातदन्तस्य वा कुर्यान्नाम्नि वापि कृते सति' उदकक्रियाशब्देन दाहश्चोच्यते । तदभावे तदभात् । अत्र वाशब्दो वैभाषिकः । तथा लोकाक्षिः– 'तूष्णीमेवोदकं दद्यात्तूष्णीं संस्कारमेव च । सर्वेषां कृतचौलानामन्यत्रापीच्छया द्वयम्' अन्यत्रापि अकृतचौलेष्वपीति ।

खननादि संस्कारः



**दाहेऽह्नःखनने सद्यो दन्तोत्पत्तेरधः परम् ।**
**खननेऽहस्त्र्यहं दाहे त्यागे च त्र्यहमिष्यते ॥ ३४ ॥**

विकल्पेन द्वयं दाह उदकदानं च । ब्राह्मे– 'स्त्रीणां तु पतितं गर्भं सद्योजातं मृतं तु वा । अजातदन्तमासैर्वा मासैः षड्भिर्मृते सति ॥ वस्त्राद्यैर्भूषितं कृत्वा निक्षेप्तव्यं च काष्ठवत् । खनित्वा शनकैर्भूमौ सद्यश्शौचं विधीयते' प्रायेण षट्सु मासेषु दन्तोत्पत्त्यभावात् तत्र मृतं बालं खनित्वा सद्यः शुद्धिः स्यात् । दन्तोत्पत्तेः सप्तममासे वर्षात् प्रागपि दाह एव । "त्रिवर्षात्प्राग्विवाहेऽपि मरणं याति कन्यका । निखनेद्वा क्षिपेद्वापि पुनः संस्कारमर्हती"ति स्मरणात् । खननत्यागयोः संस्कारत्वेऽपि तद्विधौ पुनः संस्कारविधानाद्दाह एव संस्कार इत्यवगम्यते ॥ ३३ ॥

संस्कारविकल्पापेक्षया व्यवस्थिताशौचविकल्पमाह– ॥ **दाहेऽह्नरिति** ॥ दन्तोत्पत्तेरर्वाङ् मृतस्य शिशोर्दाहे मातृपितृभ्रातृव्यतिरिक्तानां सपिण्डानामहः अहोरात्रमाशौचम् । अत्राशौचप्रकरणेऽहःशब्दो रात्रिशब्दश्चाहोरात्रवाची । तत्र खनने सद्यः शौचम्, दन्तोत्पत्त्यनन्तरं तु खननपक्षेऽहोरात्रम्, दाहपक्षे त्यागपक्षे च त्र्यहमेव भवति । तथा चाश्वलायनः– 'अदन्तजाते स्वर्याते चैकरात्रम्' स्वर्याते मृते । याज्ञवल्क्यश्च– "अहस्त्वदत्तकन्यासु बालेषु तु विशोधनम्" विष्णुश्च– 'अदन्तजाते बाले प्रेते सद्य एव नास्याग्निसंस्कारो नोदकक्रिया च । दन्तजाते त्वकृतचौले त्वहोरात्रेण' एतद्दन्तजननात्पूर्वापरीभावेन सद्यःशौचाहोरात्रविधानं खननविषयम् । त्यागे त्रिरात्रविधा-

नात । दाहे उदकक्रियाविधानाच्च । अनेनैवाभिप्रायेण याज्ञवल्क्यश्च– 'आ दन्तजन्मनः सद्य आ चौलान्नैशिकी स्मृता' मनुश्च– 'नृणामकृतचौलानामशुद्धिर्नैशिकी स्मृता' इदमकृतचौलविषये दिनविधानं दन्तजननादूर्ध्वं खननविषयम् । 'ऊनद्विवार्षिकं प्रेतं निदध्युर्बान्धवा बहिः। अलङ्कृत्य शुचौ भूमावस्थिसञ्चयनादृते' इत्यनन्तरश्लोकेनैव खननविधानात् । 'अदन्तजाते बाले' इति दन्तजननात्प्राक् खनने विष्णुना सद्यः शौचविधानाच्च। 'अस्थिसञ्चयनादृते' इति अस्थिसञ्चयनरहितायां भूमावित्यर्थः । एवमेव जाबालिरपि– ''व्रतचौलद्विजानां च भवेत्त्रिषु यथाक्रमम् । दशाहत्र्यहचैकाहाच्छुध्यन्त्यपि हि निर्गुणाः'' व्रतमुपनयनम् । द्विजा दन्ताः तेषां भवे उदये । अपिशब्दाद्गुणवन्तोऽपि । अङ्गिराः– 'यद्यप्यकृतचौलो वै जातदन्तस्तु संस्थितः । दाहयित्वा तथाप्येनमाशौचं त्र्यहमाचरेत्' वृद्धपराशरः– 'अनतीतद्विवर्षस्तु प्रेतो यत्र तु दह्यते । आशौचं तत्सपिण्डानां त्रिरात्रं तत्र विद्यते' मनुश्च– 'नास्य कार्योऽग्निसंस्कारो न च कार्योदकक्रिया । अरण्ये काष्ठवत्त्यक्त्वा क्षिपेत्तु त्र्यहमेव तु' इदमिदानीं चिन्त्यते– ''मृतस्य शिशोर्यदा दिनान्तरे खननं दाहस्त्यागो वा क्रियते । तदा मृताहाद्येव सद्यस्त्र्यहकल्पना? आहोस्वित् 'खनित्वा शनैर्भूमौ' 'अरण्ये काष्ठवत्त्यक्त्वा 'दाहयित्वा तथाप्येन'मिति लोकाक्षिमन्वङ्गिरोवचनैः क्त्वाप्रत्ययेन खननादिसंस्कारं निर्दिश्यानन्तरमेव सद्यः शौचविधानात् खननादिसंस्कारोत्तरकालं वा? इति'' नन्वनग्नेर्मरणे मरणाद्यादशाहविधायिभिः वचनैर्मृताहाद्येव तत्कल्पनमिति चेन्न तेषां पूर्णाशौचविषयत्वात् । बाल-



विषये साग्न्यनग्नित्वव्यपदेशासम्भवाच्च । तत्सम्भवेऽपि मरणाद्याशौचे प्रवृत्तेऽपि खननाद्युत्तरकालमेव सद्यः शौचविधिरिति न विरोधः । यत 'एतत्प्रेतप्रतिपत्तेरूर्ध्वमेव सद्यः शौचादिकमनुष्ठेय'मिति सङ्ग्रहकारैः व्याख्यातम् । न च सामान्यप्राप्तदशाहापवादत्वेनैव हि सद्यः शौचादि विधीयते । स च दशाहादिविधिर्मरणाद्येव । अतो न खननाद्युरुकालं सद्यः शौचादिविधिपरमिदं वचनजातमिति वाच्यम् अविशेषविधेः । अत एव यथा सद्यः शौचादिः 'दशाहं शावमाशौच'मिति सामान्यप्राप्तदशाहापवादो भवति । तथैव मृताहाद्याशौचविध्यपवादः स्यात् । क्त्वाप्रत्ययान्तस्य धात्वर्थस्य धात्वन्तरार्थैककर्तृकात्पूर्वकालत्वानुशासनात् । 'मुखं व्यादाय स्वपिती'त्यत्र व्यभिचारान्न पूर्वकालत्वनियमसम्भव इति चेन्न । वार्तिककारादिभिर्व्यभिचारस्य परिहृतत्वात् । यद्वा मुखव्यादानस्य पूर्वकालीनत्वसम्भवान्न व्यभिचारः । अन्यथा, 'प्रक्षाल्य पादावाचामेत्' 'स्नात्वा भुञ्जीत' 'भुक्त्वोपतिष्ठेत' ''उपनीय तमध्यापयेत्'' इत्यादिष्वपि विपर्ययप्रसङ्गो दुर्वारः स्यात् । एतेन, 'धात्वन्तरात्पूर्वप्रयोगनियम एव क्त्वाप्रत्ययस्य क्रियते' इति मतं च निरस्तम् । ननु, दिनान्तरे बालसंस्कारे शवे तिष्ठत्यपि पूर्वेद्युराशौचाभावेन कर्मानुष्ठानप्रसङ्ग इति चेन्मैवम् । संस्कारात्प्रागाशौचाभावज्ञापकाभावात् । इदमेव ज्ञापकमिति चेन्न । यद्यप्याशौचं मरणाद्यस्ति । तथापि, न खननाद्युत्तरकालमेव सद्यः शौचानुष्ठानमेवेति वचनार्थत्वात् । 'सूतकं तु प्रवक्ष्यामि मृतिजन्मनिमित्तकम्' इत्याशौचस्य मरणोत्पत्तिविशिष्टत्वाच्च ननु, 'समानकर्तृकयो'रित्यनुशासनात् । यस्तु करोति तस्यैव सद्यः

शौचादिरिति चेत्सत्यम् । तथापि, 'दाहयित्वाग्निहोत्रेण स्त्रियं वृत्तिमतीं पतिः । आहरेद्विधिवद्दारान्' इत्यत्र दारस्य पुत्रकर्तृकत्वेऽपि दाराहरणस्य पितृकर्तृत्ववदन्येषामपि तदघमुपपद्यते । ननु, पुत्राद्यभावे भर्तुरपि दाहादिकर्तृत्वसम्भवेन वा तत्कारयितृत्वमात्रेण वा एककर्तृत्वमत्र सम्भवतीति विषमो दृष्टान्त इति चेन्न । सर्वेषामपि सपिण्डानां प्रत्यासन्नसपिण्डाभावे दाहादिकर्तृत्वसम्भवात् । सत्यपि सुतादौ दाहादिकारयितृत्वसम्भवाच्च समः समाधिः । तर्हि भ्रातृणां च पित्रोरप्येवमिति चेन्न । 'दशाहेनैव दम्पत्योः सोदराणा'मित्यादिविशेषवचनैः सद्य आशौचादेर्बाधितत्वात् । किञ्च, यस्माच्च विज्ञानेश्वरः– 'पितृपात्रं तदुत्तानं कृत्वा विप्रान् विसर्जये'दित्यत्र क्त्वाप्रत्ययबलेनैव हि पूर्वश्लोकोक्तस्यापि विप्रविसर्जनस्य पश्चाद्भावित्वं पितृपात्रोत्तानस्य पूर्वभावित्वं च प्रतिपादितम् । यत्तूक्तम्, आहिताग्निव्यतिरिक्तमृतौ मरणाद्याशौचमिति तन्न सहन्ते धर्मशास्त्रप्रवीणाः । 'अनग्नेर्मरणात्साग्नेराशौचं दाहतः परम् । तयोः सञ्चयनाहादि' इत्यादिषु सञ्चयनशब्दप्रयोगात् । न हि बालस्य सञ्चयोऽस्ति 'पञ्चमाब्दादिसञ्चय' इत्यादिस्मृतेः । अतो मरणाद्याशौचमिति बालव्यतिरिक्तमेव । तस्मादस्माकमयमेव पक्षो निर्विपक्ष इति भाति । 'तदिदं विद्वांसो विदाङ्कुर्वन्तु ते हि युक्तायुक्तार्थौ व्यतिविदते' उक्तार्थे सङ्ग्रहश्लोकः– 'मृतस्य च यदा दाहस्त्यागो वा खननं शिशोः ।
तदा तद्दिवसाद्येव सद्योऽहस्त्र्यहकल्पना' इति ॥ ३४ ॥

**चौलात्पराशौचम्**

चौलात्परं कथम्? इत्यपेक्षायामाह– ॥ चौलात्परमिति ॥ चौलात् त्रिवर्षाद्वा परं शिशुमरणे पितृ-



**चौलात्परं त्रिरात्रं स्यात्स्वजात्युक्तं व्रतात्परम् ।**
**त्रियामायास्तृतीयांशे यदि जन्मर्तुमृत्यवः ॥ ३५ ॥**

भ्रातृव्यतिरिक्तानां त्र्यहम् । व्रतादुपनयनाज्जन्मनः षष्ठाब्दाद्वा परं स्वजात्युक्तं 'जन्महान्योस्तु वर्णाना'मित्युक्ताशौचं भवतीत्यर्थः । तथा मनुः– 'निवृत्तचौलकानां च त्रिरात्राच्छुद्धिरिष्यते' याज्ञवल्क्योऽपि– 'त्रिरात्रमा व्रतादेशाद्दशरात्रमतः परम्' पारस्करश्च– 'उपनीतस्य पूर्णाघ'मिति ॥ श्रीः ॥ रात्रौ जन्मादिसम्भवे तत्राशौचव्यवस्थामाह–

**रात्रिजननादिकालविभागः**

॥ **त्रियामाया इति** ॥ सन्ध्याकालव्यतिरेकेण रात्रिमानानुसारेण रात्रिं त्रेधा विभज्य तत्राद्यौ द्वावंशौ विहाय तृतीयांशे यदि जन्मर्तुमृत्यवः स्युः । तदा प्रभातादिपरदिनाद्यघं भवति द्वयोरंशयोः समाहारो द्व्यंशः । तस्मिन् यदि ते स्युः । तदा पूर्वदिनप्रभृति अघमनुष्ठेयम् । अत्र 'वैश्यापुत्रो हरेद् द्व्यंशमंशं शूद्रासुतो हरेत् । ज्येष्ठस्य द्व्यंशो हार्यः स्याद् द्व्यंशे भार्यानिरंशके' इति मनुबृहस्पतिशातातपाद्यभियुक्तप्रयोगेन स्मृत्यनुसारित्वाच्च सङ्ग्रहस्य पित्वादित्वनिश्चयात् ङीष्प्रतिषेधः । अत्र पराशरः– 'तृतीयभागे सम्प्राप्ते मलं स्यान्निशि चेत् स्त्रियाः । प्रभातादित्रिरात्रेण शुद्धिं तस्यापि निर्दिशेत्' स्मृत्यर्थसारे च– 'रात्रेस्तृतीयभागात्प्राग्यदि नारी रजस्वला । पूर्वेणाह्ना तु सा शुध्येदूर्ध्वं चेदुत्तरेण त्वि'ति । काश्यपश्च– "रात्रितुर्यत्रिभागं तु द्वौ भागौ पूर्व एव तु । उत्तरांशः प्रभातेन युज्यते मृतसूतके" हारीतश्च– 'ऋतौ च सूतके शावे तृतीयांशः परान्वितः । आद्यौ

द्वावंशकौ युक्तौ पूर्वेणाह्नेति निश्चयः' यत्त्विदं वचनम्- "उदिते तु यदा सूर्ये नारीणां दृश्यते रजः । जनिर्विपत्तिर्वापी"ति 'यस्याहस्तस्य शर्वरी'ति । यत्तु च स्मृत्यन्तरम्- "रात्रावेव समुत्पन्ने मृते रजसि सूतके ! पूर्वमेव दिनं ग्राह्यं यावन्नोदयते रविः" एतद्वयं यवकोटिविषयम् । 'यवकोट्युदयो वारप्रभवस्तत्र मन्मत' इति ब्रह्मसिद्धान्ते दर्शनात् । लङ्कादेशे तु 'वारप्रवृत्तिर्लङ्कायां रात्र्यर्धे' "लङ्कायामर्धरात्रिः" लाटाचार्यः कथयति- 'पुनश्चार्धरात्रं स्वतन्त्रे' इत्यादिवचनैरर्धरात्रे वारप्रवृत्तिनियमात् । 'उदयादुदयं वारं मनुते यो भवेदिति । स्यात्तत्क्षपात्रिभागेऽपि तस्याशौचं गताहज'मित्यनिष्टापादनेन उदये वारप्रवृत्तेर्दूषितत्वाच्च । तर्हि पराशरादिवचनविरोध इति चेन्न । सन्ध्याकालव्यतिरेकेण त्रेधा विभक्तत्रिंशन्नाडिकात्मकरात्रिभागद्वयान्तस्यार्धरात्रत्वात् । किञ्च, लङ्काशब्देन मध्यरेखोच्यते । ततश्च तत्रैवैवं वारप्रवृत्तिः । ततोऽन्यत्र तु तद्देशसन्निकर्षविप्रकर्षोपाधिवशेन देशान्तरसंस्कारवशात् कालाधिक्ययोगेन भागद्वयान्तस्यार्धरात्रत्वासम्भवाच्च । एवमेव 'अर्धरात्रे व्यतीते तु मुहूर्तं पूर्वसंयुतम् । उत्तरांशः प्रभातेन जातेषु च मृतेषु च' इत्यादिवचनमपि नेयम् । अत्र 'तुण्डीरमण्डले तु अविगीतशिष्टाचारपरत्वात्तत्तद्देशाचारानुसारेण व्यवस्थे'ति विज्ञानेश्वरोक्तत्वाच्च । 'त्रिष्वंशेष्वन्तिमो योंऽशः क्षपायाः सूतकादिषु । संयुज्यतेऽह्ना गम्येन सर्वत्रान्यो गतेऽहनि ॥ न्यायोऽयं शाल्मले सोऽन्यत्रापि इत्येव तथोच्यते' इति ब्रह्मसिद्धान्ते शाल्मलीदेशन्यायस्य लङ्कादेशविषयत्वेन चातिदेशाच्च । 'जननादौ रात्रिं कुर्यात्त्रिभागं त्वि'ति वचनार्थप्रकारेणैवानुष्ठेयम् ।



**मृताहाद्यघमेकाग्नेर्यज्वनो दहनादि तत् ।**
**यज्वायज्वपुनर्दाहे शिष्टाघं यद्यघाद्बहिः ॥ ३६ ॥**

गम्येन आगामिना परदिनेनेत्यर्थः । सन्ध्याकालव्यतिरेकेणेति कथम् ? इत्थं तस्य रात्रिदिनविलक्षणत्वात् । 'न दिवा न नक्त'मिति श्रुतेः । 'सन्ध्यारात्र्योर्न कर्तव्यं यथा सन्ध्या तथा दिवा । दिवासन्ध्यास्वि'ति मन्वादिषु भेदव्यपदेशाच्च । अत्र सन्ध्याकालः

**सन्ध्याकालः**

पादोनचतुर्नाडिकात्मकः । 'प्रहरार्धं तथा सन्ध्या' इति क्षीरतरङ्गिण्यामुक्तत्वात् । 'रात्र्यास्त्रियामे'ति व्यपदेशाच्च । यत्तु गार्ग्य आह- 'द्विनाडिका भवेत्सन्ध्ये'ति । यत्तु, पराशरः- 'सन्ध्यामुहूर्तमात्रा वै ह्रासवृद्धौ समाः स्मृता' इति । यत्तु बोधायन आह- 'उदयात्प्राक्तनी सन्ध्या घटिकात्रयमीरिता' इति । यच्च, स्मृत्यन्तरम्- 'सायं सन्ध्या त्रिघटिका' यदपि वचनान्तरम्- "प्रातः सन्ध्या त्रिनाडी स्यात्सायं सन्ध्या तथाविधे"ति । एतत्सर्वं 'सन्ध्ययोरग्निकर्म च' 'सन्ध्ययोश्च बहिर्ग्रामादासनम्' "तस्मात्सन्धौ होतव्यम्" "चत्वारि खलु कर्माणि सन्ध्याकाले विवर्जयेत्" इत्यादिस्मृत्युक्तानुष्ठानानुष्ठानोपयोगिकालप्रतिपादनपरम् । न तु सन्ध्याकालियत्तानियमपरम् । मन्वादीनामनुष्ठानव्यवस्थापकत्वादित्यलम् ॥ ३५

अथाहिताग्न्यनाहिताग्निविषयभेदेनाशौचव्यवस्थामाह-

**आहिताग्निमरणे**

॥ मृताहादीति ॥ एकाग्नेरनाहिताग्नेः । इयं च निमित्तपञ्चमी, यज्वन इति च । अतोऽनाहिताग्निमृतिनिमित्तजमाशौचं मरणादि । यज्वमृतिनिमित्ताशौचं

दाहादिसपिण्डानां भवतीत्यर्थः । अत्र पैठीनसिः— ‘अनग्निमत उत्क्रान्तेराशौचं हि द्विजातिषु । दाहादग्निमतो विद्याद्विदेशस्थे मृते’ सति । उत्क्रान्तेर्मरणात् । विदेशस्थ इति सन्निहितस्याप्युपलक्षणम् । अङ्गिराश्च— ‘अनग्निमत उत्क्रान्तेः साग्नेः संस्कारकर्मणः । शुचिः सञ्चयनं दाहान्मृताहस्तु यथाविधि’रिति । स्मृत्यन्तरे च— ‘अनग्नेर्मरणात्साग्नेराशौचं दाहतः परम् । तयोः सञ्चयनं दाहान्मृताहस्तु तिथिः स्मृता’ अनेन साग्न्यनग्न्योरुभयोरपि । अस्थिसञ्चयनं दाहाद्येव । तृतीयचतुर्थादिदिवसग्रहणं बोद्धव्यम् । अयं च मरणाद्याशौचविधिर्बालव्यतिरिक्तविषयः । तद्विषये विशिष्टस्योक्तत्वात् । अत्राहिताग्निविषये दहनाद्याशौचविधानं तदाद्येव दशाहाशौचप्राप्त्यर्थम् । न तु तत्पूर्वमाशौचाभावप्रतिपादनार्थम् । जन्ममृतिमात्रनिमित्तत्वादाशौचप्रवृत्तेः । तथा दक्षः— ‘सूतकं तु प्रवक्ष्यामि मृतिजन्मनिमित्तकम्’ इति । ‘मृताशौचनिमित्ते द्वे दहनं मरणं तथा । ज्ञातीनां मरणादेव दहनाद्दाहकस्य तु’ इति च स्मृत्यन्तरम् । अत्र ‘ज्ञातीनां मरणा’देवेत्युक्त्वानन्तरं ‘दहनाद्दाहकस्य त्वि’त्युक्तत्वात् । सपिण्डव्यतिरिक्त एव दाहकः । तस्य प्रेतगृहावासादिनिबन्धनत्वेनैवाशौचवैषम्यस्मरणात् । तथा स्पष्टमुपरिष्टाद्वक्ष्यते । सपिण्डस्तु दाहकश्चेदेकोद्दिष्टान्त एव स्यात् । ‘संस्कर्तुः शुद्धता त्वघात् । भोजनं पिण्डदानं च दद्यात्पुण्याहतः शुचिः’ इति बोधायनस्मरणात् । एकादशाहत एव सपिण्डस्य शुचिः । अतो मृताहाद्याशौचसत्वेऽपि आहिताग्निविषये दाहाद्येवाशौचमिति मन्तव्यम् । एवमेव ‘दाहाद्याशौचं विज्ञेयं सर्वेषामग्निहोत्रिणां मरणाद्येव कार्यं स्यात्



संयोगो यस्य नाग्निभिः’ ‘दहनाद्येव कार्यं स्याद्यस्य वैतानिको विधिः’ इति ब्रह्मपुराणव्याघ्रादिवचनार्थो ग्राह्यः ॥ श्रीः ॥ **यज्वायज्वेति** ॥

**पुनर्दाह विषये**

पुनर्दाहानन्तरं सोमयाजिनः । “अमन्त्रपूर्वं दग्धानामङ्गवैकल्यशोषिणाम् । अनुभावमृतानां च पुनर्दहनमिष्यते ॥ मन्त्रवत्संस्कृतस्यापि असमाप्तोदकस्य तु । अर्वाग्दशदिनादूर्ध्वं पुनर्दाहो विधीयते” ‘देशान्तरमृतानां तु राजसर्पविषादिभिः । तेषामङ्गं पलाशाद्यैः कृत्वा देहं दहेत्पुनः ॥ शववत्प्रतिपत्तिं च कुर्यान्निःस्पर्शनं विदुः’ इत्यादिवचनविहितदशाहमध्ये आहिताग्न्यनाहिताग्न्योः पुनः संस्कारे कृते सति संस्कारदिनादूर्ध्वं यावद्दिनमात्रं दशरात्रावशिष्टं तावद्दिनमेवाघं भवति । न पुनर्दाहादिदशाहम् अत्र विभक्तिविपरिणामः कार्यः । यदि दशाहाद्बहिर्यज्वायज्वपुनर्दाहः स्यात् । ‘यज्वायज्वपुनर्दाहे दशाहं त्र्यह’मिति क्रमेणाघं भवति । एतच्चानाहिताग्निविषये त्र्यहविधानं प्रागाशौचग्रहणोदकदानाभावे । तद्भावे नास्ति । प्रागघग्रहणाभावे पूर्णं स्वजात्युक्तम् । अयं च प्रागाशौचग्रहणाभावपक्षे दशाहविधिरस्थिदाहे, न तु प्रतिकृतिदाहे, तत्र त्र्यहमेव । एवमाशौचं सपिण्डानाम् । पुत्राणां तु, इह प्रतिकृतिदाहेऽपि प्रागाशौचग्रहणाभावे दशाहमेव तद्ग्रहणेऽपि पितृविषये सदा दशाहोदकदानविधानात् । तत्साहचर्यात्तदविनाभूतमाशौचं दशाहमेव । तथा ‘आशौचान्तः कीकसादेः* प्रदाहे शेषाच्छुद्धिस्तद्बहिश्चेत्त्रिरात्रम् । पुत्रस्यापि प्रागघस्य ग्रहश्चेन्नोचेत्तस्याप्यत्र सम्पूर्णमाहुः’

* कीकसमस्थि ।

**दशाहं त्र्यहमाशौचं पूर्णे प्राक्चेदघाग्रहः ।**
**अस्थिदाहे प्रतिकृतेर्दाहे तु त्र्यहमित्यघम् ॥ ३७ ॥**

प्रागाशौचग्रहे पुत्रस्य त्र्यहविधानमापदादिना त्र्यहोदकदानविषयम् । औरसव्यतिरिक्तपुत्रविषयं वा । अपिशब्दात्सपिण्डानामपि । स्मृत्यन्तरे च– 'पूर्वं गृहीताशौचानां न पुनर्दहने त्वघम् । तस्मिन्नुदकदातॄणामाशौचं पुनरब्रवीत्' ननूदकदाननिबन्धनाशौचं च किं याजिन उक्तम् ? इति चेन्मैवं शङ्किष्ठाः । तस्य सम्पर्कविषयत्वेनोक्तत्वात् । पैठीनसिश्च– 'आहिताग्निश्चेत्प्रवासाद्यभिम्रियेत पुनः संस्कारं कृत्वा शववच्छौचम्' ब्राह्मे पुराणे– 'अनाहिताग्नेर्दाहस्तु कार्यो गृह्याग्निना द्विजैः । तदलाभे पलाशोत्थैः पर्णैः कार्यं शरीरकम् ॥ एवं पर्णमयं दग्ध्वा त्रिरात्रमशुचिर्भवेत्' स्मृत्यन्तरे च– ''दग्ध्वास्थि पित्रोः पुत्रस्तु दशाहं सूतकी भवेत् । तयोः प्रतिकृतिं दग्ध्वा त्रिरात्रमशुचिर्भवेत्''

**शाखासंस्कारः** एतत्प्रतिकृतिदाहे पुत्रस्य त्र्यहस्मरणं पूर्ववद्व्याख्येयम् । अत्र देवलः– ''दग्ध्वास्थि पित्रोः पुत्रस्तु दशाहमशुचिर्भवेत । तयोः प्रतिकृतिं दग्ध्वा शववच्छौचमिष्यते'' शवजात्युक्तमित्यर्थः । स्मृत्यन्तरे– 'नरं पर्णमयं दग्ध्वा त्रिरात्रमशुचिर्भवेत् । मातापित्रोर्दशाहं स्यादस्थिदाहे तथैव च' प्रागाशौचग्रहणाभावे दशाहादूर्ध्वं पर्णनरदाहे सपिण्डानां त्र्यहं मातापित्रोस्तादृग्विधदाहे अस्थिदाहे च पुत्राणां दशाहमित्यर्थः । सङ्ग्रहे च– 'असपिण्डमृतौ कुर्यात् त्रिरात्रेणोदकक्रियाम् । दशाहात्पिण्डदानं स्यान्मातापित्रोर्विशेषतः' अत्रोदकक्रियाशब्देनाशौचमप्युच्यते । 'उदकक्रियाशौचं चे'ति वसिष्ठेन तयोः समानयोगक्षेमत्वस्मरणात् । स्मृत्यन्तरे च– 'संस्कृताग्नौ दहेत्पश्चाद्दशरात्रं तु सूतकम् । इतरेषां त्रिरात्रं स्याज्ज्ञातीनामपि सूतकम्' प्रागगृहीताशौचानां ज्ञातीनां सूतकं दशरात्रम् । इतरेषां गृहीताशौचानां तेषां त्रिरात्रम् ।'ज्ञातीनां नतु सूतक'मिति पाठे वत्सरादूर्ध्वं प्रेतकर्मविषयत्वमेवास्यानुसन्धेयम् । तथा वक्ष्यते । स्मृत्यन्तरे च– 'अस्थ्ना पलाशवृन्तैर्वा दग्ध्वा तु प्रतिरूपकम् । पित्रोर्दशाहमाशौचमन्येषां तु त्रिरात्रकम्' इति । श्रीः ॥



**सपिण्डानां सुतानां तु दशरात्रमिहेष्यते ।**
**दशरात्रं सदा पित्रोः परोक्षमरणश्रुतौ ॥ ३८ ॥**

प्रोषितपितृविषयाशौचमाह– ॥ दशरात्रमिति ॥

**देशान्तर मरणे** वत्सरमध्ये तत्परं वा मातापित्रोरसन्निधानमरणश्रवणे सर्वेषामपि पुत्राणां दशाहमेव । तुशब्दो मातृत्वाविशेषधीजनितदशाहसंशयनिवर्तकः । सपत्नीमातुरसमक्षमृतिश्रुतौ वत्सरात्परं त्र्यहमेव तत्पूर्वं तु दशाहम् । अत्र विशेषः, ज्येष्ठेन कृत और्ध्वदेहिके, अब्दे चातिक्रान्ते, काले तस्याः सपत्नीमातुः परोक्षमृतिश्रवणे दिनम् । तयोर्मातापित्रोस्तच्छ्रुतौ कनिष्ठस्य त्र्यहम् ! अत्र पैठीनसिः– 'पितरौ चेन्मृतौ स्यातां दूरस्थो ज्येष्ठपुत्रकः । श्रुत्वा तद्दिनमारभ्य दशाहं सूतकी भवेत्' देशान्तरमृतमातापितृविषयाशौचम् । स्मृत्यन्तरे च– ''यत्र कुत्र स्थितः पुत्रः श्रुत्वा पितृविपर्ययम् । ज्ञात्वा तद्दिनमारभ्य दशाहं सूतकी भवेत्'' विपर्ययं मरणम् । स्मृत्यर्थसारे– 'मातापितृमरणे दशाहादेरूर्ध्वं संवत्सरादूर्ध्व-

मपि पुत्रः श्रुतदिवसमारभ्य दशाहमाशौचं कुर्यादुदकपिण्डादि च' विज्ञानेश्वरे च– 'महागुरुनिपाते तु आर्द्रवस्त्रोपवासिना । अतीतेऽब्देऽपि कर्तव्यं प्रेतकार्यं यथाविधि' यथाविधि दशाहादिकं प्रेतकार्यमाशौचं पुत्रेण कर्तव्यमित्यर्थः । अनेनैवाभिप्रायेण स्मृत्यर्थसारे च– 'मुख्यकर्ता विदेशस्थो मातापित्रोर्मृतौ यदि । संवत्सरे व्यतीतेऽपि कुर्यात्प्रेतक्रियां पुनः' विज्ञानेश्वरे च– "पितृपत्न्यामतीतायां मातृवर्जं द्विजोत्तमः । संवत्सरे व्यतीतेऽपि त्रिरात्रमशुचिर्भवेत्' पितृपत्नीशब्दस्य सम्बन्धिशब्दत्वात्सपत्नीपुत्रस्यैवेदमाशौचम् । एवमुत्तरत्रापि सम्बन्धिशब्दोपादाने तत्प्रतियोगिकमाशौचं समर्थनीयम् । वरदराजीयसङ्ग्रहेऽपि— 'प्रागब्दाज्जननीसमं दिशतु तत्प्रेतोदकादिक्रियां तस्माच्चोपरि गौणमातृमरणं श्रुत्वा सदाघं त्र्यहम्' गौणमाता सपत्नीमाता । जननीसमं दशाहमित्यर्थः । स्मृत्यन्तरेऽपि– 'पितरि प्रोषिते प्रेते पुत्रो देशान्तरं गतः । कृतक्रिये त्रिरात्रं स्याद्दशाहमकृतक्रिये'

**ज्येष्ठेन कृते कनिष्ठेन कार्यम्**

एवं साक्षात्पितृविषयेऽपि त्र्यहविधानात् सपत्नीमातृविषये दिनमेव युक्तमुत्पश्यामः । अत्र कृतक्रिये पितरि त्र्यहविधिः कनिष्ठविषय एव । ज्येष्ठस्य तु 'कृतक्रियेऽपि पितरि दशाहं सूतकी भवेत् । दद्यात्तिलोदकं पिण्डं सपिण्डीकरणं पुन'रिति दशाहविधानात् । कृतस्यापि सपिण्डीकरणस्य पुनः करणविधानसामर्थ्याज्ज्येष्ठविषयत्वमस्यावगम्यते ।

**प्रोषित भ्रातृमरणे**

तथा पैठीनसिः– "प्रोषिते भ्रातृमरणे दत्तपिण्डोदकक्रिये । त्रिरात्रं सूतकं तत्र दशाहं पत्नि-



**त्र्यहं मातुः सपत्न्यास्तु दशाहं वत्सरादधः ।**
**कृतौर्ध्वदेहिके त्र्यब्दे दिनं तस्यास्त्र्यहं तयोः ॥ ३९ ॥**

पुत्रयोः" अत्र पत्नीविषये दशाहविधिर्दशरात्रप्रेतकार्यकरणकालाभिप्रायः । यत्तु प्रोषितभ्रातुः, 'भ्रातुर्देशान्तरमृतौ षण्मासाद्वत्सरादधः । दशरात्रं त्रिरात्रं स्याद्दशाहं दाहकस्य* त्वि'ति पैठीनसिवचनम्, यच्च 'देशान्तरमृतिर्यत्र त्वनुजाग्रजयोर्यदि । षण्मासाद्वत्सरादर्वाग्दशाहं त्र्यहमाचरे'दिति स्मृत्यन्तरम्, यदपि 'कृतोदके तु षण्मासात्पक्षिणी त्वघमिष्यते । अधश्चेत्त्रिदिनं ग्राह्यमकृते तु दशाह्निकम्' इति गालववचनम्, एतत्सर्वं विज्ञानेश्वरादिभिरनादृतत्वात् 'अतिक्रान्ते दशाहे तु त्रिरात्रमशुचिर्भवेत् । मासत्रये त्रिरात्रं स्या'दिति मन्वादिवचनप्रकारस्यैव प्रतिपादनाच्च "मन्वर्थविपरीता तु या स्मृतिः सा न शस्यते" इति मन्वादिस्मृतिविरोधेनाप्रशस्तत्वाच्च समाचाराभावाच्चानादरणीयम् । स्मृतिचन्द्रिकायाम्– "ज्येष्ठेन वा कनिष्ठेन सपिण्डीकरणे कृते । देशान्तरगतानां च पुत्राणां च कथं भवेत् ॥ श्रुत्वा तु वपनं कृत्वा दशाहान्तं तिलोदकम् । ततः सपिण्डीकरणं कुर्यादेकादशेऽहनि ॥ द्वादशाहे न कर्तव्यमिति शातातपोऽब्रवीत्" इति तज्ज्येष्ठकृते सपिण्डीकरणान्तप्रेतकृत्ये कनिष्ठस्य वत्सरात्प्राग्दशाहं तिलोदकदानविधिपरमिति न दोषः । अत्रोदकदानादिविधिनिमित्तत्वादाशौचस्य तदविनाभूतमाशौचोदकशब्देनोच्यते । ततश्च 'दशाहोदकदानविधौ दशाहं त्र्यहमुदकदानविधावाशौचं त्र्यहमित्यर्थो ग्राह्यः । किञ्च, ज्येष्ठेन

* दाहकस्य भ्रातुः ।

**शिष्टाहमेव सर्वेषामपि ज्ञातेऽन्तरा त्वघे ।**
**प्राक् सञ्चयात्सुतस्येत्थं तदूर्ध्वं दशरात्रकम् ॥ ४० ॥**

पितुः सपिण्डीकरणान्तप्रेतकृत्ये कृते कनिष्ठः पितृमृतिं श्रुत्वा वपन
कृत्वा दशाहं तिलोदकं दद्यात् । कनिष्ठकृते तु तस्मिन् ज्येष्ठः पितृ
मृतिं श्रुत्वा वपनं कृत्वा दशाहान्तं तिलोदकमात्रं दद्यान्न तु पिण्डम्
तत एकादशाहे सपिण्डीकरणमेव कुर्यान्न त्वेकोद्दिष्टमिति विभज्य
'ज्येष्ठेन वा कनिष्ठेन' इति वचनार्थो द्रष्टव्यः । अनेनैवाभिप्रायेण
स्मृत्यन्तरेऽपि– 'देशान्तरस्थौ पितरौ मृतौ चेदन्योऽपि

**अन्यकृत प्रेतकृत्ये** कुर्यादखिलं च पैतृकम् । दाहं विनान्यानि पुनश्च सर्वं
ज्येष्ठोऽपि कुर्यादनुजैः सपिण्डम्' इति । अस्यार्थः,
अन्येन कृतं प्रेतकृत्यं ज्येष्ठपुत्रः पुनः सर्वं दाहं विना
विधिवत्कुर्यात् । अनुजैः कृतं चेत्सपिण्डम्, सपिण्डीकरणमात्रं कु-
र्यात् । तथा 'मुख्यकर्ता विदेशस्थः *कालेऽकाले श्रुतो यदि । तिलवारि
प्रकुर्वीत पिण्डदानं विवर्जयेत्' कनिष्ठकृतं श्राद्धान्तकृत्यं ज्येष्ठः श्रुत-
वान् यदि तदा तिलोदकं कुर्यात् । पिण्डदानं विवर्जयेदित्यर्थः ॥ ३५
॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥

**दशाहमध्ये श्रवणे** ॥ **शिष्टाहमेवेति** ॥ शावे च सूतके चान्तरा मध्ये
अवगते पुत्रव्यतिरिक्तानां सर्वेषामपि सपिण्डानां
शिष्टाहमेवाघं भवति । यत्राघपरिज्ञानं तद्दिनादि याव-

* काले एकोद्दिष्टकाले । एकादशाह इति यावत् ॥ अकाले
एकादशाहानन्तरकाल इत्यर्थः ॥



द्दिनमात्रं दशरात्रावशिष्टं तावन्मात्रमघमित्यर्थः । अत्र मनुः– 'विगतं
तु विदेशस्थं शृणुयाद्यो ह्यनिर्दशम् । यच्छेषं दशरात्रस्य तावदेवाशु-
चिर्भवेत्' याज्ञवल्क्यश्च– 'प्रोषिते कालशेषः स्यात्' पुत्रविषये विशे-
षमाह– ॥ **प्राक् सञ्चयादिति** ॥ अस्थिसञ्च-

**दशाहमध्ये श्रुते पुत्रविषये** यनात्प्राग्दशाहमध्ये पित्रोर्मृतिश्रुतौ पुत्रस्य मु-
ख्यकर्तुरवशिष्टाहमेवाशौचम् । तदूर्ध्वं सदा दशा-
हमेव । स्मृत्यन्तरे– 'पित्रोर्मृतौ चेद्दूरस्थः श्रुत्वा
तद्दिवसात्परम् । पुत्रः शुध्येद्दशाहेन सञ्चयाः प्राक्तु शेषतः' पैठीनसिश्च–
'दशरात्रस्य मध्ये तु शुध्यते शेषवासरैः । दशरात्रे व्यतीते तु पित्रो-
श्चदौर्ध्वदेहिकम् ॥ पुत्रः कुर्यात्तदाशौचं दशरात्रमिति स्मृतम् । शु-
ध्यते शेषवासरैः' अस्थिसञ्चयनात्प्रागिति शेषः । तथा पैठीनसिः–
'शृणोत्यनिर्दशं पित्रोः पुत्रस्तु मरणं यदा । मृताहात्प्रेतकार्यं स्या-
च्छुद्धिस्तस्य दशाहतः' नतु, प्रवाहादिभिरस्थिनाशे सञ्चयाभावात्
कथमाशौचव्यवस्था? इति चेन्मैवम् । ''अस्थिसञ्चयनात्पूर्वं प्रमादेन
हृतं यदि । अस्थिप्रतिकृतीकृत्य तद्देशान्मृदमाहरेत् ॥

**अस्थिनाशे** अस्थिवत्सञ्चयेद्विद्वान् लोष्टं वा भस्म वा ततः । प्रमा-
णमस्थिवत्कृत्वा तन्मन्त्रं तु जपेद्बुधः ॥ जलप्रवाहे
कूले वा तीरे वाथ सरिद्धृते । जलौघे वास्थिनाशे तु तन्मन्त्रं तु जपे-
द्बुधः' इत्यादिवचनैरस्थ्यभावेऽपि तद्देशलोष्टादिना, तदभावे तन्मन्त्र-
जपमात्रेण वास्थिसञ्चयसम्भवेन व्यवस्थासिद्धेः ।

**सञ्चयनदिनम्** यद्वा, 'चतुर्थे सञ्चयः कार्यः' 'चतुर्थेऽहनि विप्रस्य'

**उत्पाद्य पुत्रं संस्कृत्य वेदमध्याप्य यः पिता ।**
**कुर्याद्वृत्तिं च नष्टेऽस्मिन् द्वादशाहं महागुरौ ॥ ४१ ॥**

'चतुर्थेऽहनि कर्तव्यमस्थिसञ्चयनं नृप!' 'चतुर्थे पञ्चमे चैव सप्तमे नवमे तथा' 'चतुर्थेऽहनि विप्राणाम्' इत्यादिवचनैरस्थिसञ्चयनस्य चतुर्थदिनकर्तव्यत्वविधानात् । 'आ वा सञ्चयनादस्थ्नाम्' इति मनुनास्थिसञ्चयनेन चतुर्थदिवसस्यैवोपलक्षितत्वाच्च । विप्रस्य चतुर्थदिनात् पूर्वं पितृमरणश्रुतौ शिष्टाहम्, चतुर्थदिवसादि तच्छ्रुतौ दशाहमिति केचिद्वदन्ति । यदत्र युक्तं तद्ग्राह्यम् ॥ ४० ॥

**महागुरुलक्षणम्** महागुरुविषये– ॥ उत्पाद्यपुत्रमिति ॥ "उत्पाद्य ऋतावुपेया"दित्यादिविधिना, न तु देवरन्यायेन जनयिता । संस्कृत्य नामादिसंस्कारैरतिशययुक्तं कृत्वा वेदमध्याप्य ('तपोविशेषैर्विविधैर्मेखलाजिनदण्डेन भिक्षाभिर्गुरोर्नित्यमेनं दण्डादिभिर्युक्त'मित्यादिवचननिचयोक्तनियमशिक्षणपूर्वकं वेदं ग्राहयित्वा यः पिता वृत्तिं च करोति । एवम्भूतः स पिता महागुरुस्तस्मिन् महागुरौ मृते पुत्रस्य द्वादशाहं भवति ) तथा विज्ञानेश्वरे– "यस्तु पिता पुत्रानुत्पाद्य वेदार्थं ग्राहयित्वा वृत्तिं च विदधाति । तस्य महागुरुत्वादुपरमेद्द्वादशाहमेवाशौचम्" 'महागुरुषु दानाध्ययने वर्जयेरन्' इत्याद्याश्वलायनोक्तं द्रष्टव्यम् । स्मृत्यन्तरे च– 'सूतकं द्वादशाहान्तं न कुर्याद्देवतार्चनम् । न कुर्यात्पितृकार्याणि दानं होमं जपं तथा' ॥ ४१

अतिक्रान्ताशौचमाह– ॥ **त्रिरात्रं त्रिष्विति** ॥

**अतिक्रान्ताशौचम्** दशाहादूर्ध्वं त्रिषु मासेषु अतिक्रान्ताशौचश्रवणे



**त्रिरात्रं त्रिषु मासेषु पक्षिण्येव ततस्त्रिषु ।**
**ततोऽहष्षट्स्वथ स्नानं दशरात्रात्ययश्रुतौ ॥ ४२ ॥**

पुत्रव्यतिरिक्तसपिण्डानां त्र्यहमघम् । ततो मासत्रयादूर्ध्वं त्रिषु मासेषु पक्षिणी । ततः षण्मासादूर्ध्वं षट्सु मासेषु अहोरात्रम् । अथ संवत्सरानन्तरं स्नानम् । एवमतिक्रान्ताशौचं कृतौर्ध्वदेहिकमृतिविषयम् । अन्यत्र मृतिविषये 'यज्वायज्वपुनर्दाह' इति विशेषस्योक्तत्वात् । सर्वस्यापि वत्सरात्परं स्नानम् । अत्र याज्ञवल्क्यः– 'प्रोषिते कालशेषः स्याच्छेषं त्रियहमेव तु । सर्वेषां वत्सरे पूर्णे प्रेते दत्वोदकं शुचिः' गौतमश्च– 'श्रुत्वा चोर्ध्वं दशम्याः पक्षिणी'मिति । वृद्धवसिष्ठः— 'मासत्रये त्रिरात्रं स्यात् षण्मासे पक्षिणी तथा । अहस्तु नवमादर्वागूर्ध्वं स्नानेन शुध्यति' स्मृत्यन्तरे च– "दशाहाद्यतिपत्तौ तु दशाहादिदिनक्रमात् । त्रिरात्रपक्षिण्येकाहस्सद्यश्शौचाः प्रकीर्तिताः" यत्तु मनूक्तम्– 'अतिक्रान्ते दशाहे तु त्रिरात्रमशुचिर्भवेत्' यत्तु जाबालिवचनम्– "अतीते सूतके स्वे स्वे त्रिरात्रमशुचिर्भवेत्" इति तत्सर्वं मासत्रयविषयमिति विज्ञानेश्वरे च व्याख्यातम् । ननु, वृद्धवसिष्ठवचनेन नवममासादूर्ध्वं स्नानमात्रमेव प्रतीयते । तत्कथं तत्रापि दिनविधिरुच्यते? 'वीते त्वाशौचे वत्सरान्तं त्वेकरात्रेण' इति विष्णुस्मरणात् । 'संवत्सरे व्यतीते तु स्पृष्ट्वैवापो विशुध्यती'ति । वृद्धात्रिमनुभ्यां संवत्सरातिक्रम एव स्नानमात्रेण शुद्धिविधानाच्च कथन्तरां शङ्कावकाशः? तथा देवलः– 'आ त्रिमासात् त्रिरात्रं स्यात् षण्मासात्पक्षिणी तथा । परमेकाहमा वर्षात्ततः स्नात्वा विशुध्यती'ति । "अत्याशौचं दिनं

**पित्रोर्भ्रातुर्भवेन्नान्येष्वनुपेतात्ययात्यघम् ।**
**पितुः स्नानं तदन्येषां न च तत्सूतकात्यये ॥ ४३ ॥**

सद्यस्त्र्यहैकाहमशौचिनोः । पक्षिण्यघेष्वघान्तश्रुतस्त्वेककालोऽन्यथा प्लवः” त्र्यहैकाहाशौचिनोः स्वस्वाशौचकालेऽतिक्रान्तेऽवगते सति तदतिक्रान्ताशौचं क्रमेण दिनम्, सद्यः स्नानं भवति । पक्षिण्याशौच-विषये दशाहमध्येऽतिक्रान्ताशौचश्रवणे एककालः । रात्रौ श्रुतौ रात्रिः । दिवाश्रुतौ दिवामात्रम् । अन्यथा, दशाहाद्बहिः श्रुतौ स्नानमेव । अत्र शङ्खः– ‘ऊर्ध्वं दशाहाच्छ्रुत्वैकरात्र’मिति । मनुश्च– ‘बाले देशान्तरस्थे च पृथक्पिण्डे च संस्थिते । सवासा जलमाप्लुत्य सद्य एव विशुद्ध्यति’ इति । बालोऽकृतचौलः । (पृथक्पिण्डोऽसपिण्डः) । गौतमश्च– ‘बाला-देशान्तरितप्रव्रजितासपिण्डानां सद्यः शौच’मिति । स्मृत्यन्तरेऽपि– ‘अतीते पक्षिणीकाले दशाहाभ्यन्तरश्रुतौ । दिवा वा यदि वा रात्रावे-ककालेन शुद्ध्यति’ इति ॥ ४२ ॥

**अनुपनीताशौचम्**

पितृभ्रातृविषये– ॥ **पित्रोर्भ्रातुरिति** ॥ अनुपनीतम-रणातिक्रान्ताशौचं पित्रोर्भ्रातुश्च भवेत् । नान्येषु ज्ञातिषु । मातापित्रोर्भ्रातॄणां च पूर्णाशौचित्वात् ‘त्रिरात्रं त्रिषु मासेष्वि’त्युक्ताशौचं भवेत् । अन्येषु पुनर्नास्त्येव । मनुः– ‘निर्दशं ज्ञातिमरणं श्रुत्वा पुत्रस्य जन्म च । सवासा जलमा-प्लुत्य शुद्धो भवति मानवः’ ज्ञातिशब्देनात्रानुपनीत एवोक्तः । उपनी-तमरणे तु ‘उपेते विषमं वृत्ते तस्मिन्नेवातिकालज’मिति व्याघ्रेणातिक्रा-न्ताशौचविधानात् । तर्हि पित्रोरप्येवमिति चेन्न । ‘उपेते विषम’मि-



त्युपनयोपजीवनेनैव दशाहादिविषमाशौचं विधाय तच्छब्देन दशाहा-दिविषमाशौचनिमित्तमुपनीतं परामृश्य तत्रैवातिक्रान्ताशौचविधानात् । न हि (पितृभ्रातॄणामुपनयनमुपजीव्य दशाहादिविधिः) । “दशाहेनैव दम्पत्यो”रित्यादिना सदा पूर्णाशौचविधानात् । अतः पूर्णाशौचविषयः अतिक्रान्ताशौचविधिरिति सिद्धम् ॥ एतच्च देशान्तर-

**देशान्तरम्**

विषयम् । देशान्तरे तु सद्यःशौचविधानात् । तथा मनुः– ‘बाले देशान्तरस्थे’ इति । गौतमश्च– ‘बाले देशान्तरिते’ इति याज्ञवल्क्योऽपि– ‘देशान्तरमृतिं श्रुत्वा क्लीबे वैखानसे यतौ । मृते स्नानेन शुद्ध्यन्ति गर्भस्रावे च गोत्रिणः’ तल्लक्ष-

**देशान्तर लक्षणम्**

णमाह बृहस्पतिः- ‘देशान्तरं वदन्त्येके षष्टियोजनमा यतम् । त्रिंशद्योजनमन्ये तु द्वात्रिंशतमथापरे’ यत्तु, म-हानद्यन्तरं यत्र गिरिर्वा व्यवधायकः । वाचो यत्र विभिद्यन्ते तद्देशान्त-रमुच्यते’ इति लक्षणं तच्चिन्त्यम् । अन्यथातिप्रसङ्गात् । योजनपरि-माणमुक्तं स्मृत्यर्थसारे– ‘वितस्तिद्विगुणारत्निस्ततः किष्कुस्ततो धनुः । धनुस्सहस्रे द्वे क्रोशश्चतुष्क्रोशास्तु योजनम्’ इति ।

**जननातिक्रान्ताशौचम्**

सूतकात्यये– ॥ **पितुः स्नानमिति** ॥ पितुरेव स्नानम्, पितृव्यतिरिक्तसपिण्डानां तत्स्नानमपि नास्ति । तदु-क्तम्– ‘श्रुत्वा पुत्रस्य जन्म चे’ति । देवलश्च– ‘ना-शौचं प्रसवस्यास्ति व्यतीतेषु दिनेषु तु । नानुपेते च संवर्ते तस्मिन्ने-वातिकालजम् ॥ कृच्छ्रादीनां समाप्तिश्चेदघे शिष्टाहमिष्यते तद्बहिश्चेत् त्र्यहादिः स्यादित्याह भगवान्मनुः’ त्रिरात्रं त्रिषु मासेष्वित्युक्तविधिः

**सूतके तत्पुनः स्याच्चेच्छावे तद्वाथ सूतकम् ।**
**पूर्वेणैवोत्तरं गच्छेन्न शावं सूतकात्क्वचित् ॥ ४४ ॥**

स्यात् । तथा मनुः– 'आदिष्टी नोदकं कुर्यादा व्रतस्य समापनात् । समाप्ते तूदकं कृत्वा त्रिरात्रमशुचिर्भवेत्' त्रिरात्रमिति पक्षिण्यादेरप्युपलक्षणम् । कृच्छ्रव्रतादिकमस्त्यादिष्टमित्यादिष्टी व्रती ब्रह्मचारी च ब्रह्मचर्यव्रतस्याप्यादिष्टत्वात् । अतो व्रतसमाप्तिपर्यन्तमादिष्टी उदकमाशौचं न कुर्यात् । वत्सरमध्ये तत्समाप्तौ त्र्यहाद्याशौचमुदकदानं च कुर्यात । तत्परं तूदकमात्रमेव । 'सर्वेषां वत्सरे पूर्णे प्रेते दत्वोदकं शुचि'रिति याज्ञवल्क्यस्मरणात् ॥ ४३ ॥

**सन्निपाताशौचम्**

सांयोगिकाशौचागमप्रकारमाह– ॥ सूतके तत्पुनरिति ॥ सूतके वर्तमाने पुनर्भूयो बहुशः तत्सूतकान्तरं स्याच्चेत् शावे वर्तमाने तच्छावान्तरं सूतकं वा भवेच्चेत्तदा पूर्वाशोचकालेनैवोत्तरं पश्चादागताशौचानुष्ठानं पृथङ्न कार्यम् । अत्र विशेषः, 'न शावं सूतकात् क्वचित्' इति सूतके वर्तमाने शावाशौचं पश्चादागतं चेत्तदा सूतकेन शावाशौचं न गच्छेत् । शावाशौचं पृथगनुष्ठेयमित्यर्थः । अत्र 'क्वचित्' इत्युक्तत्वात् क्वचिद्गच्छेदिति गम्यते । सूतकान्तर्जातमरणाशौचस्य सूतकेनैवापगमस्मरणात् । तथा चोत्तरत्र वक्ष्यते । मनुः– 'अन्तर्दशाहे स्यातां चेत्पुनर्मरणजन्मनी । तावत्स्यादशुचिर्विप्रो यावत्तु स्यादनिर्दशम्' याज्ञवल्क्यश्च– 'अन्तरा जन्ममरणे शेषाहोभिर्विशुद्ध्यति' स्मृत्यन्तरे च– ''सूतके वर्तमाने तु द्वितीयं सूतकं भवेत् । पूर्वेणैव विशुद्धिः



**पूर्वस्यान्त्यदिने तच्चेद् द्व्यहं पूर्वाघतः परम् ।**
**त्र्यहं पूर्वान्त्ययामे च तत्प्रभातेऽथ वा यदि ॥ ४५ ॥**

स्याज्जाते जातं मृते मृतम्" दक्षश्च– 'सूतके मृतके चैव तथैव मृतसूतके' एवं संयुक्ताशौचानां पूर्वाशौचेन शुद्धिः । षट्त्रिंशन्मतेऽपि– 'शावाशौचे समुत्पन्ने सूतकं तु यदा भवेत् । शावेन शुध्यते सूतिर्न सूतिः शवशोधिनी' देवलश्च– 'अघानां यौगपद्ये तु ज्ञेया शुद्धिर्गरीयसा । मरणोत्पत्तियोगे तु गरीयो मरणं भवेत्' सूतकाच्छावस्य गरीयस्त्वाच्छावेन सूतकस्य शुद्धिः' न सूतकेन शावस्येत्यर्थः । अङ्गिराश्च– 'अन्तर्दशाहे जनने पश्चात्स्यान्मरणं यदि । प्रेतमुद्दिश्य कर्तव्यं तत्राशौचं स्वबन्धुभिः' ॥ ४९ ॥

**अन्यदिनागत सूतकान्तरे**

अत्र विशेषमाह– ॥ पूर्वस्यान्त्यदिन इति ॥ पूर्वस्य शावाशौचस्य सूतकस्य वान्त्यदिने तत्पूर्वोक्तसन्निपाताशौचं स्याच्चेत्तत्पूर्वाघतः परं द्व्यहमघं भवति । पूर्वाघं समाप्यानन्तरं द्व्यहमनुष्ठेयम् । पूर्वाशौचस्यान्त्ययामे तच्चेदथ वा पूर्वाघान्त्यदिनप्रभाते वा तद्यदि स्यात्तदा पूर्वाघतः परं त्र्यहमघम् । अयं च द्व्यहत्र्यहविधिः पूर्णाशौचविषयः । तथा गौतमः– 'तच्चेदन्तः पुनरापतेत्तच्छेषेण शुध्येरन् । रात्रिशेषे द्वाभ्यां प्रभाते तिसृभिः' प्रभातमिति सूर्योदयात्पूर्वमरुणोदयात्पश्चान्मध्यमकालः । शातातपश्च– 'रात्रिशेषे द्व्यहाच्छुद्धिर्यामशेषे त्र्यहाच्छुचिः' स्मृत्यन्तरे च– 'रात्रिमात्रावशिष्टे पूर्वाशौचे यद्याशौचान्तरं सन्निपतेत्तदा पूर्वाशौचं समाप्य द्वाभ्यां रात्रिभ्यां शुद्धिः । प्रभाते पुनस्तस्या रात्रेः

**दीर्घादल्पं व्रजेन्नाल्पाद्दीर्घमित्यघसङ्गतौ ।**
**प्रभातेऽन्त्यदिनेऽवाप्तमपैत्यल्पं हि दीर्घतः ॥ ४६ ॥**

पश्चिमे यामे वा जननाशौचं सन्निपतेत्तदा तिसृभी रात्रिभिः शुद्धिः । न पुनः पूर्वाशौचमात्रेण। स्मृत्यन्तरे च– 'आशौचमध्ये जननं यदि स्यादाशौचमायाति तथैव तेन । निशावशेषे द्विदिनात्तदूर्ध्वं यामावशेषे त्रिदिनात्प्रयाति' यामशेषे त्र्यहमिति वक्तव्यम् । 'प्रभाते त्र्यह'मिति किमुभयोक्त्या? उच्यते । प्रभाते त्र्यहमित्युक्तेन पूर्वं व्द्यहमेव प्राप्नोति । यामशेषे त्र्यहमित्युक्तेऽरुणोदयात्परस्य कालस्य सन्ध्याकालत्वेन दिवारात्रिविलक्षणत्वात्तत्राघान्तरसम्भवे दशाहसद्भावसन्देहः स्यात् । तत्पूर्वमेव त्र्यहविधिश्च स्यात् । ततश्च प्रभाते त्र्यहविधिर्न स्यात् । तन्निरासार्थमुभयग्रहणम् ॥ ४५ ॥

**दीर्घाल्पसूतकसन्निपाते**

अत्र विशेषमाह– ॥ दीर्घादल्पमिति ॥ अघसङ्गतौ स्वल्पप्रमाणाशौचे महत्परिमाणाघसन्निपाते सति नाल्पाशौचाद्दीर्घाशौचं गच्छेत् । तथोशनाः– "स्वल्पाशौचस्य मध्ये तु दीर्घाशौचं भवेद्यदि । न पूर्वेण विशुद्धिः स्यात्स्वकालेनैव शुध्यति" पैङ्गलगृह्ये च– 'अत्र वृद्धौ पश्चिमेन पश्चिमेन समापयेत्' देवलश्च– 'परतः परतः शुद्धिः परवृद्धौ विधीयते' परवृद्धौ पश्चादागतस्याशौचस्याधिक्ये परतः पश्चादागताशौचेनैव शुद्धिर्विधीयत इत्यर्थः ॥ अत्र क्रमाशौचस्य निषिद्धत्वात्समानोदकसपिण्डाशौचयोगे वानुपनीतोपनीताशौचयोगे वा दीर्घादल्पं व्रजेन्नाल्पाद्दीर्घमिदमिति द्रष्टव्यम् । अत्रैवाल्पात्पञ्चदिनाधिकाद्दशादिनं गच्छे-



**ज्ञात्यघे चेन्मृतिः पित्रोर्मात्राशौचेऽथ वा पितुः ।**
**दशाहं पित्रघे स्याच्चेत्पक्षिणी तदघात्परम् ॥ ४७ ॥**

दिति नोक्तम् ॥ ४६ ॥

**औरसपुत्रविषये**

एवं पुत्रव्यतिरिक्तविषये सन्निपाताशौचमुक्त्वा पुत्रस्य विशेषमाह– ॥ ज्ञात्यघे चेदिति ॥ सपिण्डाशौचमध्ये मातापित्रोर्मृतिश्चेत् यद्वा मातृमरणाशौचमध्ये जनकस्य मृतिश्चेत्तदा पुत्रस्य दशरात्रमाशौचम् । पितृमृतिविषयाशौचमध्येऽस्य मातुर्मृतिश्चेत्परं पित्राशौचादूर्ध्वं पक्षिणी । पित्राशौचं समाप्यानन्तरं मातृमृतिनिमित्तं पक्षिण्याशौचमनुष्ठेयमित्यर्थः । तथा स्मृतिः– 'मातापित्रोर्मृतौ चैव जनने त्वौरसस्य च । स्वाशौचापगमेनैव शुद्धिः स्यान्नान्यकालतः' विज्ञानेश्वरे च– 'मातर्यग्रे प्रमीतायामशुद्धौ म्रियते पिता । पितुः शेषेण शुद्धिः स्यान्मातुः कुर्यात्तु पक्षिणीम्' अग्रे पूर्वं मातरि मृतायामशुद्धौ मात्राशौचमध्ये पिता म्रियेत चेत्तदा दशाहादिरूपो यः पितुराशौचकालशेषः । तेनैव शुद्धिः । न तु मात्राशौचशेषेण । पितरि पूर्वं मृते पित्राशौचमध्ये यदि माता म्रियते तदा पित्राशौचादूर्ध्वं मातुः कुर्यात्तु पक्षिणीम् । देवलो विशेषमाह– 'मृतं पतिमनुव्रज्य पत्नी

**सहगमने**

चेज्ज्वलनं गता । न तत्र पक्षिणी कार्या पैतृकादेव शुध्यति' अनुमृतिविषये सङ्ग्रहे विशेषः– "पूर्वेद्युर्वा परेद्युर्वा भर्तारमनुगच्छति । भर्त्रा सहैव शुद्धिः स्याच्छ्राद्धं चैकदिने भवेत् ॥ मात्राशौचस्य मध्ये तु पिता प्रेतत्वमृच्छति । पितुर्मरणमारभ्य

**पित्रन्यानन्तरानेकान् दग्ध्वा पूर्वाघतः शुचिः ।**
**पितरौ चेद्दहेत्तत्र दशाहाच्छुचिरग्निदः ॥ ४८ ॥**

शुध्यते शेषवासरैः ॥ स्वाशौचकालतस्त्वेव सूतिकाजनकोऽग्निदः । शुध्येरन्नघयोगेऽपि न पूर्वाशौचशेषतः" अघयोरघानां वा सन्निपातेऽपि सूतिकाजनकश्चाग्निदश्च स्वस्वजात्युक्ताशौचकालत एव शुध्येरन् । न तु पूर्वाशौचकालशेषेण । अत्र तुशब्दोऽग्निदविषये वक्ष्यमाणविशेषद्योतकः । एतदुक्तम्– "जात्यघे वर्तमाने यदि स्वस्य पुत्रो जायते तदा मातुः सूतिकाविधित एव शुद्धिः । पितुर्दशाहेनैव अघे वर्तमाने तन्मध्ये दाहे कृते सति तदा तस्य दाहादिदशाहेनैव शुद्धिर्न पूर्वाशौचशेषेण । पूर्वाशौचस्य शावस्य सूतकस्य वा कालशेषेण न शुध्येरन्नित्यर्थः । तथा अखण्डादर्शे– "जननमरणयोरन्यतरस्मिन्वर्तमाने यदि कश्चिज्जायेत ततस्तु मातापित्रोर्दशाहमेवाशौचं न सपिण्डान्तरवत्पूर्वकालेन शुद्धिः । नापि लाघवेन नापि गुरुतरेण" तथा बोधायनः– "जननमरणयोः सन्निपाते जनने मातापित्रोर्दशाहमेवाशौचम्" स्मृत्यन्तरे च– 'मातापित्रोर्मृतौ चैव जननेऽप्यौरसस्य च । स्वाशौचापगमेनैव शुद्धिः स्यान्नान्यकालतः' दक्षश्च– "मृताशौचनिमित्ते द्वे दहनं मरणं तथा ।
ज्ञातीनां मरणादेव दहनाद्दाहकस्य तु" ॥ ४७ ॥

**दाहकविषये विशेषः**

दाहकस्य विशेषमाह– ॥ **पित्रन्येति** ॥ प्रथमं तावन्मातापितृव्यतिरिक्तं यं कञ्चिज्ज्ञातिं दग्ध्वा तदाशौचमध्ये भूयोऽपि स्वदाह्यान् द्वितीयं बहून्वा ज्ञातीन् दग्ध्वा बिभृयाद्वा दग्ध्वाग्निदः पूर्वाशौचत एव शुचिर्भवति । तत्र



**सूतकान्तस्तु जातस्य मृतौ शिष्टाहमिष्यते ।**
**पितुस्तु द्व्यहमन्त्याहे तत्प्रभाते त्र्यहं भवेत् ॥ ४९ ॥**

पूर्वाशौचमध्ये सोऽग्निदः पुत्रः पितरौ दहेच्चेद्दशाहेनैव शुचिर्भवति । तदाह नारदः– 'अन्तर्दशाहे चेत्कर्तुः पुनः प्रेतस्य संस्कृतिः । तस्माच्छुद्धिः पूर्वशेषादेकोद्दिष्टं यथोदितम्' हारीतश्च– 'दाहकार्यद्वयं स्याच्चेत्कर्तुरैक्ये विशेषतः । पूर्वेणैव समाप्येत तोयपिण्डं द्वितीयकम्' तोयपिण्डमिति स्वाविनाभूताशौचोपलक्षणम् । अत्राशौचस्य पिण्डोदकदानस्य च पूर्वेण समापनेऽपि 'एकोद्दिष्टं यथोदित'मिति नारदस्मरणाद्यथोदितमेव भवति । "एकादशेऽह्नि मध्याह्न एकोद्दिष्टं विधीयते" 'आद्यमेकादशेऽहनि' इत्यादिस्मृत्युक्तेः । तत्तदेकादशाह एवैकोद्दिष्टं भवतीत्यर्थः । अङ्गिराश्च– 'दाहकस्त्वा दशाहे तु शवदाहं चरेद्यदि । पूर्वेणैव विशुद्धिः स्यात्पित्रोस्तद्दिवसाद्भवेत्' संवर्तश्च– 'पूर्वकर्ता दशाहे तु पितरौ चेद्दहेत्पुनः । पूर्वेण शुद्धिर्नैव स्यात्पित्रोस्तद्दिवसाद्भवेत् ॥ ॥ ४८ ॥

**दशाहान्त शिशुमरणे**

॥ **सूतकान्तस्त्विति** ॥ तुशब्दो 'न शावं सूतकात्क्वचित्' इत्युक्तार्थनिवर्तकः । सूतकमध्ये जातस्य शिशोर्मृतौ सपिण्डानां जनननिमित्तमघं शिष्टाहं भवति 'जात उभयो'रिति स्मरणात् । जातशिशुमृतौ पित्रोः सदा पूर्णाशौचित्वात्सूतिकान्तिमदिने तन्मृतौ तत्परं पितुर्द्व्यहमाशौचम् । तत्प्रभाते त्र्यहं, यद्यपि मातुरप्येवं, तथापि तस्यादशाहात्परमपि सूतकस्य विद्यमानत्वात् । अत्र पितृमात्रस्य द्व्यहत्र्यहविधानं मन्त-

व्यम् । अत्र तुशब्दो ज्ञातीनां त्र्यहत्र्यहविधाननिवर्तकः । पितृग्रहणा-
द्भ्रातृव्युदासः । 'कृते नाम्नि सोदराणा'मिति दशाहात्परमेव भ्रातुर्मर-
णाशौचविधानात् । अत्र बृहन्मनुः– "दशाहाभ्यन्तरे बाले प्रमीते
तस्य बान्धवैः । शावाशौचं न कर्तव्यं सूत्याशौचं विधीयते" बान्धवैः
सपिण्डैः । अत्र 'यामशेषे द्व्यहाच्छुद्धिः प्रभाते तिसृभि'रिति शाता-
तपवचनान्यनुसन्धेयानि । देवलः– "पुनः प्राप्ते दशाहात्प्राक् पूर्वेण
सह गच्छति । दशमेऽह्न्यापतेद्यस्य द्वियहात्तु विशुध्यति ॥ प्रभाते तु
त्रिरात्रेण दशरात्रेष्वयं विधिः" ननु, 'अन्तर्दशाहे जातस्य शिशोर्नि-
ष्क्रमणं यदि । सूतकेनैव शुद्धिः स्यात्पित्रोः शातातपोऽब्रवीत्' इति
व्याघ्रवचनात्पित्रोरेव सूतकं शिष्टाहमस्तु । सपिण्डानां च, 'अनिवृत्ते
दशाहे तु पञ्चत्वं यदि गच्छति । सद्य एव विशुद्धिः स्यान्न प्रेत-
नोदकक्रिया' इति कात्यायनवचनात् । कथं तेषामपि शिष्टाहविधिः?
इति चेन्मैवम् । वचनार्थमविज्ञाय बालिशवद्वादीः । इदमेव वचनं
लिखित्वा विज्ञानेश्वरेण 'एतत्प्रेताशौचाभिप्राय'मित्युक्तम् । तथा पार-
स्करः– 'गर्भे यदि विपत्तिः स्याद्दशाहं सूतकं भवेत्' इत्यनेन सपि-
ण्डानां प्रसवनिमित्तस्य विद्यमानत्वात् । यदा तु, 'न प्रेतं नापि सूत-
क'मिति पाठः । अन्तर्दशाहे शिशुमरणे प्रेताशौचं च नास्ति । तत्रैव
जननसम्भवे पृथक् सूतकं च नास्तीत्यर्थः । इत्युक्तत्वात् 'प्राङ्नामकर-
णात्सद्यः शुद्धिः' इति शङ्खेन जातमृताशौचस्यैव सद्यश्शौचस्मरणात् ।
"अन्तर्दशाहे जातस्य मरणं यदि सम्भवेत् । सद्यश्शौचं सपिण्डानां
सूतकं तु प्रवर्तते" इति व्याघ्रेणोक्तत्वाच्च अतस्तेषामपि शिष्टाहविधि-



सिद्ध एव । एवं च सूतकनिमित्तभूते शिशौ मृते 'निमित्ताभावेन्नैमित्ति-
कस्याप्यभावः' इति न्यायेन सपिण्डानां सूतकाभाव एवेति केश्चिद्यत्
प्रलपितं तत्स्मृत्यनभिज्ञानसाम्राज्यमेवेति तद्दूरतो निरस्यमेव । यत्तु
बृहन्मनुवचनम्– 'जीवञ्जातो यदि ततो मृतः सूतक एव तु । सूतकं
सकलं मातुः पित्रादीनां दिनत्रय'मिति, 'तन्मृतजाते जातमृते वा
सपिण्डानां दशाहमाशौचम्' 'सूतकं तु प्रवर्तते' "गर्भे यदि विपत्तिः
स्याद्दशाहं सूतकं भवेत्" इति हारीतव्याघ्रशातातपादिविशेषवचनैर्बा-
धितम् । अतः सूतकमध्ये मृतेऽपि शिशौ सपिण्डानां जनननिमित्ता-
शौचसङ्कोचो नास्त्येव । नन्विदं वचनं च 'मुहूर्तं जीवितो बालः पञ्चत्वं
यदि गच्छति । मातुः शुद्धिर्दशाहेन सद्यश्शौचं तु गोत्रिणाम्' इति
बृहत्प्रचेतोवचनं चाखिलविरुद्धार्थत्वादुभयोर्विज्ञानेश्वरेण सद्यश्शौचविधे-
रग्निहोत्रार्थत्वेन त्र्यहविधानस्य च नाभिकर्तनात्प्राङ्मृतशिशुजनननिमि-
त्तसूतकविषयत्वेन च व्यवस्थाकृता कृता । अतः कथं बृहन्मनुवचनबाधः?
इति चेन्न । 'गर्भे यदि विपत्तिः स्या'दित्याद्यनेकवचनान्युदाहृत्य
इत्यादिवचननिचयपर्यालोचनया सपिण्डानां जनननिमित्ताशौचसङ्कोचो
नास्तीत्यवगम्यते । इति तेनैवोक्तत्वात् । किञ्च, यथा तेनैव 'पार्वणै-
कोद्दिष्टवचनजातविप्रतिपत्तिभिरुदीच्यैः 'प्रत्यब्दं पार्वणेनैवे'ति वचनादे-
कोद्दिष्टस्य क्षेत्रजौरसव्यतिरिक्तविषयत्वेन कृता व्यवस्था प्रत्यब्दश-
ब्दस्य रथसप्तम्यादिश्राद्धपरत्वप्रतिपादनेन मृताहशब्दाभावेन च कद-
र्थिता । तथात्रापि त्र्यहविषयैर्नाभिच्छेदात्पूर्वापरीभावविषयत्वाप्रतीतेर्व-
चनान्तराभावादनुदाहृतत्वाच्च बहुस्मृतिविरोधाच्च नेयं व्यवस्थोपपद्यते ।

किञ्च, यथा तेनैव च 'अमावास्याक्षयो यस्ये'ति वचनं मृताहमात्रो-
ल्लेखनपार्वणपरबहुवचनसङ्कोचभयान्नादृतम् । तद्वदत्रापि, ''गर्भे यदि
विपत्तिः स्यान्मृतजातेऽपि वा । दशाहाभ्यन्तरे बाले'' 'अन्तर्दशाहे
जातस्य' 'अन्तःसूतके चेदर्थानामाशौचं सूतकवदन्तर्दशाहोपरतस्य सू-
तकाहोभिरेवाशौच'मिति पारस्करहारीतबृहन्मनुव्याघ्रमरीच्यादिबहु-
स्मृतिवचनविरोधापत्तेर्नेदं वचनमादरणीयम् । ऊढायाः सूतिकायाः
'ऊढानां दशाहात्प्रा'गिति यावद् अन्तःसूतके चेदाशौचम्, जात-
शिशोर्मरणाशौचं सूतकमध्ये चेत्, सूतकवत्सूतकमिव भवति । न
पृथक् शावाशौचं भवतीत्यर्थः । अन्तर्दशाहे जातस्य मरणे पृथङ्मरणा-
शौचं नास्तीति । किन्तु, सूतकवत्सूतकयुक्तं भवति न तु तद्दशाहं
सूतकहीनं भवतीत्यर्थः । किञ्चेमां व्यवस्थां सूक्ष्मेक्षिणो न क्षमन्ते ।
'यावन्न छिद्यते नालं तावन्नाप्नोति सूतकम् । छिन्ने नाले ततः पश्चात्
सूतकं तु विधीयते' 'छिन्नायामाशौच'मिति जैमिनिहारीतवचनैर्नाभि-
च्छेदात् प्राक् सूतकप्राप्त्यसम्भवेन त्र्यहविध्यनुपपत्तेर्नाभिच्छेदादूर्ध्वं
सूतकप्राप्तिविधानाच्च विरोधादव्यवस्था । न ह्यत्रास्ति विरोधः । येन
न व्यवस्थापेक्षा । यस्मादेवमर्थः, 'सूतके सूतिकावर्जं संस्पर्शो न
निषिध्यते' इति स्मृत्या पित्रादीनामित्यङ्गस्पर्शः प्राप्तः । स हि निषि-
ध्यते । 'पित्रादीनां दिनत्रय'मिति । यथा 'सूतकं मातुरेव हि' 'सूतकं
तु सपिण्डानां पित्रोर्वा मातुरेव वा' ''मातापित्रोस्तन्मातुर्वा'' 'सूतकं
मातुरेव स्यात्' ''सर्वेषां शावमाशौचं मातापित्रोस्तु सूतकम् । जनने
शुचयः सर्वे मातापित्रोस्तु सूतकम्'' 'जननेऽप्येवं तेषां तत्र मातापि-



**जनने क्षेत्रजादीनां तत्पित्रोस्त्र्यहमिष्यते ।**
**तज्ज्ञात्योर्दिनमेवेत्थमुपेतानां मृतौ न चेत् ॥ ५० ॥**

तरावशुचिर्माततेत्येके' इति याज्ञवल्क्यसंवर्तगौतममनुयमपैठीनसिशङ्ख-
लिखितादिवचनेषु यद्यपि सूतकं मातुरेव । पितुर्वा मातापित्रोर्वा ना-
न्येषामित्यापाततः प्रतीयते । तथापि, मन्वादिवचनान्यस्पृश्यत्वादि-
लक्षणाशौचपराणीतिसर्वैर्व्याख्यातृभिराख्यातानि । तथात्रापि पित्रादी-
नामस्पृश्यत्वादिलक्षणं सूतकं दिनत्रयमिति न कश्चिद्विरोधः । 'मुहूर्तं
जीवितो बाल' इति वचनं सूतकिनोऽन्याभावेऽग्निहोत्रार्थं सद्यश्शौचपरम् ।
'स्नानोपस्पर्शनाभ्यामग्निहोत्रहवनं कुर्या'दिति शङ्खकण्वादिस्मृतिभ्यः
अन्तस्सूतकाभावप्रतिपादनं मूर्खप्रलपितमिति सिद्धम् ॥ ४९ ॥

**क्षेत्रजादि पुत्राशौचम्**

क्षेत्रजादिविषये– ॥ **जनने क्षेत्रेति** ॥ आदिशब्देन
दत्तादयः सङ्गृह्यन्ते । अत्र मनुः– 'औरसः क्षेत्रजश्चैव
दत्तः कृत्रिम एव च । गूढोत्पन्नोऽपविद्धश्च दायादा
बान्धवास्तु षट् ॥ कानीनश्च सहोढश्च क्रीतः पौनर्भ-
वस्तथा । स्वयञ्ज्ञातश्च शूद्रश्च षड्दायादाश्च बान्धवाः ॥ एतेषां जनने
क्षेत्रजादिपित्रोस्त्र्यहं भवेत्' पित्रोरिति द्विवचनेन बीजी क्षेत्री च
पितोच्यते । तच्छब्देन तावेव । ज्ञात्योरिति द्विवचनेनोत्पादकक्षेत्रिस-
पिण्डौ । तयोः क्षेत्रजादीनामुपेतानां मृतौ चेत्थमेव पित्रोस्त्र्यहं
तज्ज्ञात्योर्दिनमित्युक्तमेव । एवकारः पितृत्वनिबन्धनदशाहशङ्काव्य-
वच्छेदकः । 'न चेदनुपनीतानां मृतौ पित्रोस्त्र्यहं तयोस्तज्ज्ञात्योः
सद्यश्शौचं पित्रोः क्षये क्षेत्रजानामपि त्र्यहम् । अत्र विष्णुः– 'अनौ-

**पित्रोस्त्र्यहं तयोः सद्यस्त्र्यहं तेषां पितृक्षये ।**
**जाते च सोदके प्रेते त्र्यहं सद्यो व्रतादधः ॥ ५१ ॥**

रसेषु पुत्रेषु जातेषु च मृतेषु च । त्रिरात्रेण भवेच्छुद्धिरेका[ह]
सपिण्डतः' हारीतोऽपि– "परपूर्वासु भार्यासु पुत्रेषु कृतकेषु [च]
मातामहे त्रिरात्रं स्यादेकाहं तु सपिण्डतः" उभयत्र सप्तम्य[र्थे]
तसिः । बीजिक्षेत्रिपित्रोरिति शेषः । ततश्च पित्रोर्मृतयोश्च सपिण्डे[षु]
जातेषु च मृतेषु च । क्षेत्रजादीनां त्र्यहं दिनमिति क्रमेणाघमित्य[र्थो]
ग्राह्यः । तथा मरीचिः– "सूतके मृतके चैव त्रिरात्रं परपूर्वयोः ।
एकाहं तु सपिण्डानां त्रिरात्रं यत्र वै पितुः" मनुश्च– 'बैजिकाद[भि]
सम्बन्धादनुरुध्यादघं त्र्यहम्' यत्तु, विज्ञानेश्वरेणेदं जन्यजनकभावसम्ब-
न्धोपाधितया त्र्यहस्मरणात्पितृविषयमित्युक्तम् । तस्याप्येवमेवार्थः ।
मुख्यपितृविषयत्वे तु, 'एकाहं तु सपिण्डेषु त्रिरात्रं यत्र वै पितुः'
इति मरीचिस्मरणात् । सपिण्डानां दिनमेव स्यात् । तथा च, 'सपि-
ण्डानां दिनं विप्रकृष्टसमानोदकानां त्र्यह'मित्युन्मत्तप्रलापः स्यात् ।
'दशाहेनैव दम्पत्योः' 'दशाहं शावमाशौचम्' इत्यादिवचनानि तदा
दत्तजलाञ्जलीनि स्युः । अतो बीजिपितृविषयमेव मनुवचनमिति व्या-
ख्येयम् । अनुपनीतक्षेत्रजादिविषये प्रजापतिः– 'अन्याश्रितेषु दारेषु
परनारीसुतेषु च । गोत्रिणः स्नानशुद्धाः स्युस्त्रिरात्रेणैव तत्पिता'
काश्यपश्च– 'बालानामदन्तजातानां त्रिरात्रेणैव शुद्धिः'
पित्रोरिति शेषः ॥ श्रीः ॥ ॥ जाते च सोदक
इति ॥ सोदकः सापिण्डनिरूपणे निरूपितः । तस्मिन्

**समानोदकविषये**



**यस्मिन् दिने रजो दृष्टं तदादि त्रिदिनं स्त्रियाः ।**
**अनेकपितृकावेकमातृकौ तु परस्परम् ॥ ५२ ॥**

समानोदके जाते व्रतादुपनयनात्परं मृते च सति त्र्यहम् । उपनयनात्
प्राक् सद्यः शौचम् । अत्र मनुः– 'जन्मन्येकोदकानां तु त्रिरात्राच्छु-
द्धिरिष्यते' देवलश्च– "समानोदकानां त्र्यहं गोत्रजानामहः स्मृतम्"
जाबालिश्च– 'दशाहेन सपिण्डानां शुद्धिः स्यात्तु त्रिरात्रतः । समा-
नोदकानामपि गोत्रजानामहः स्मृतम्' अनुपनीतसमानोदकविषये मनुः–
'बाले देशान्तरस्थे च पृथक्पिण्डे च संस्थिते । सवासा जलमाप्लुत्य
सद्य एव विशुद्ध्यति' पृथक्पिण्डः समानोदकः । गौतमोऽपि– 'बाल-
देशान्तरितप्रव्रजितासपिण्डानां सद्यःशौचम्' अत्रासपिण्डः समानोदकः ।
एवमेव तद्व्याख्यानद्वये व्याख्यातम् ॥ ५० ॥ ५१ ॥

॥ यस्मिन् दिन इति ॥ यथाह पराशरः– 'ब्रह्मह-
त्यावलिप्तस्य वासवस्य च दुष्कृतम् । तदंशभाजां
स्त्रीणां तु मासि मासि रजः पतेत् ॥ अतो दिवा वा
रात्रौ वा मलवद्वाससः स्त्रियाः । तदहादि त्रिरात्रं
स्यादाशौचं भवति ध्रुवम्' अनिरीक्ष्यत्वादिलक्षणम् । मनुश्च– 'भर्तुः
शुद्धा चतुर्थेऽह्नि स्नानेन स्त्री रजस्वला' स्मृत्यन्तरे च– "रजस्वला
चतुर्थेऽह्नि स्नानाच्छुद्धिमवाप्नुयात्" अत्र विशेषः, 'आ द्वादशाहान्ना-
रीणां मूत्रवच्छौचमिष्यते । अष्टादशाहात्स्नानं स्यात् त्रिरात्रं परतो-
शुचिः ॥ मासे चोर्ध्वं रजो यस्यास्तत्कालजमुदाहृतम्' भृगुः– 'अ-
कालसम्भवे स्त्रीणां शुचित्वं तु विनिर्दिशेत् ॥ अनेकपितृकाविति ॥

**रजस्वलाविषये**

**जन्मन्यह्ना विशुध्येतां मरणे तु त्रिरात्रतः ।**
**बन्धुष्वहस्त्र्यहं पित्रोरूढा तत्तद्गृहे यदि ॥ ५३ ॥**

बहुपितृजातविषये

अत्र मरीचिः— 'मात्रैकया द्विपितृकौ भ्रातरावन्यगोचरौ । एकाहं सूतके प्रेते त्र्यहमश्रोत्रिये दिनम् ॥ श्रोत्रिये तु मृते ग्रामे दिनमश्रोत्रियेऽहनि । स्वगृहे श्रोत्रिये प्रेते त्र्यहमश्रोत्रिये दिनम्' अत्र बोधायनः 'एकां शाखामधीत्य श्रोत्रियः' मनुः— 'श्रोत्रिये तूपसम्पन्ने त्रिरात्रमशुचिर्भवेत् । अश्रोत्रिये त्वहः कृत्स्नमनूचाने तथा गुरौ' उपसम्पत्तिः मृतिः । अनेनैवाभिप्रायेणाङ्गिराश्च— 'गृहे यस्य मृतः कश्चिदसपिण्डः कथञ्चन । तस्याप्यशौचं विज्ञेयं त्रिरात्रं नात्र संशयः' गौतमोऽपि— 'एकाहं श्रोत्रिये चोपसम्पन्ने' आश्वलायनोऽपि— "एकाहं सब्रह्मचारिणि समानग्रामीये च श्रोत्रिये अश्रोत्रिये न ही"ति । एवं मन्वादिभिर्ग्रामोपसम्पन्नश्रोत्रियविषयेऽपि दिनविधानात् । अश्रोत्रियविषये कृत आशौचमिति भावः ॥ श्रीः ॥ ॥ **बन्धुष्वहरिति** ॥ तच्छब्दद्वयेन बान्धवाः पितरौ च परामृश्यन्ते । बान्धवा मातुलादयः । परिणीता स्त्री मातुलादिबन्धुगृहे प्रसूता यदि स्यात्तदा तेष्वहोरात्रमाशौचम् । पितृगृहे यदि सा प्रासोष्ट तदा पित्रोस्त्र्यहम् । अत्र पित्रोरिति द्विवचनं मातापित्रोरन्यतरमरणेऽन्यस्य वा गृहे पुत्रीप्रसवे त्र्यहप्राप्त्यर्थम् । तथा च ब्राह्मपुराणे— 'दत्ता नारी पितुर्गेहे सूयेताथ म्रियेत वा । स्वमाशौचं चरेत्सम्यक्पृथक्स्थानव्यवस्थया' व्यवस्थामुदाहरति— 'तद्बन्धुवर्गस्त्वेकेन

ऊढाविषये



**प्रसूतान्यगृहे सूता मृता वा तस्य नास्त्यघम् ।**
**परोक्षे पक्षिणी नो चेत् त्र्यहं प्रेतान्नभोजने ॥ ५४ ॥**

शुचिस्तज्जनकस्त्रिभिः' श्रीविष्णुरपि— 'संस्कृतासु स्त्रीषु नाशौचं पितृपक्षे तत्प्रसवमरणे चेत्पितृगृहे स्यातां तदैकरात्रं वा पितु'रिति । पितृसंस्कृताप्रसवे पितुरेकरात्रं तत्रैव तन्मरणे तस्य त्रिरात्रमित्यस्यार्थं केचिदूचुः । अन्ये तु केवलं विकल्पं कल्पयन्ति । तद्द्वयमप्ययुक्तम् । 'सूयेताथ म्रियेत वा' 'पितुस्त्र्यहमेव चे'त्यविशेषेणोभयत्रापि पितुस्त्र्यहविधानात् । वयं तु वदामः । 'पितृगृहे पुत्रीप्रसवमरणे यदि स्यातां तदा सन्निधौ पितुस्त्रिरात्रं परोक्षे दिनमिति व्यवस्था विरोधे सन्निधिदेशस्थापेक्षयानुसन्धातव्या' इति विज्ञानेश्वरोक्तत्वादत्रापि पक्षिणीदिनयोर्विकल्पः । प्रायः पक्षिण्येव । मृतौ परोक्षे पक्षिण्या वक्ष्यमाणत्वात् । न च पितृगृहे स्थितिमतां बन्धूनामेकरात्रं पितुस्त्रिरात्रमिति व्यवस्था युक्ता । पितुरित्येवोपसंहाराद्विषयान्तरत्वाप्रतीतेश्च । संस्कृता प्रसवनिमित्तकसूतकस्य स्वगृहे प्रसूतिनिबन्धनत्वाच्च । तथा भरद्वाजः— 'बन्धूनां मातुलादीनां प्रसूतिर्मरणं गृहे । तेषामेकाहमाशौचं पितुस्तु त्र्यहमेव चे'ति । न च 'एकाहं तु सपिण्डेष्वि'ति मरीचिः । पुत्रीप्रसवे तेषामपि दिनं सूतकं प्रसज्येत । एवं च तन्मरणेऽपि तेषां पक्षिणीविधिश्च न स्यात् ॥ ५२ ॥ ५३ ॥

ननु, सूतकस्य स्वगृहप्रसवनिमित्तत्वादन्यगेहेऽपि कस्याश्चित् प्रसवे तस्याप्यघं स्यादित्यत आह ॥ **अन्यगृह इति** ॥ अयमाशयः ननु, गौतमादिभिः श्रोत्रियाश्रोत्रियविषयभेदोल्लेखेनैवोपसम्पन्नाशौचस्मरणान्न

स्त्रीविषयमुपसम्पन्नाशौचमिति । अस्त्वेवं मृतिविषये प्रसवेऽन्यस्य क
सूतकाभावः? इति चेन्मैवम् । गरीयसोऽपि शावाशौचस्याभावोत्तया
तदभावस्य कैमुत्यसिद्धेः । तत्सद्भावे प्रमाणाभावाच्च । क्वचिदपि गृहस्य
वा बन्धुव्यतिरिक्तान्यस्य वाशौचप्रतिपादकप्रमाणासिद्धेः । इदं पर्या-
यप्रवृत्ताशौचसङ्ग्रहकारेणानुक्तत्वाच्च । प्रत्युत, न स्त्रीमृताविदं किञ्चि-
दिति च क्वचित् । एतदुपसम्पन्नाशौचं पुरुषमरण एव । न स्त्रीमरण
इत्याशौचाभावस्यैव तेन प्रतिपादितत्वाच्च । लोके गृहाशौचवदस्त्वज्ञा-
ननिबन्धन एव । न हि द्रव्यादेः साक्षादाशौचमस्ति । पुरुषस्याशौचस-
म्भवे हि आश्रयद्वारा तद्गृहद्रव्यकर्मणां दुष्टत्वात् । ननु, 'आशौचं गृहमा-
त्रस्ये'ति गृहाशौचस्मरणात्तदभावः कथम्? इति चेत् । 'अहो नूतन-
वैदुष्यं विदुषो वागगोचरः । कस्य वा वचनार्थोऽयमेवं लोके प्रकाशते'
मैवमायुष्मन्! वदीः । स्वस्वशवसंसर्गद्वारा हि तदवस्थानकालमात्र-
स्याशौचसम्भवः । "निर्गते शुचितामियात्" इति तदपगमे शुचित्वा-
भिधानात् । तथा स्मृत्यन्तरे– "दहनान्तं गृहाशौचं

**गृहाशौचम्**

यत्र पिण्डोदकक्रिया । दशरात्रमिति ज्ञेयं प्रेतस्तत्रैव
तिष्ठती"ति । नैवम्, अघिजनावस्थाने हि न गृहादे-
रघं भवति स्वगृहे सपिण्डव्यतिरिक्ताघिजनावस्थाने पुत्रीप्रसवे च तत्त-
दाशौचान्तमघप्रसक्तेः । स्वगृहे कस्याशित्प्रसवे अन्यस्यापि दशाहं
सूतकप्रसङ्गाच्च । ननु, 'पितृगृहे' 'बन्धूनां गृहे' इति स्मरणान्नान्यस्य
तत्प्रसङ्ग इति चेत् । तर्हि पितृत्वादिकमेव गृहाशौचप्रयोजकमिति
वाच्यम् । न गृहमात्रम् । एवं च, सूतकीगृहवासिनोऽन्यस्य न कि-



ञ्चित्सूतकमित्यर्थो ग्राह्यः । शावाशौचिगृहवासिनो निर्हारनिबन्धनेनैव
गृहस्मरणात् । तस्मात् 'न तावच्छुद्ध्यते भूमिर्यावत्तु स्यादनिर्दशम् ।
न तत्र कर्म कुर्वीत पित्र्यदैवादिकं क्वचित्' इत्यादिकं स्वाम्याशौचस-
द्भावविषयम् । न तु मृतिमात्रविषयम् । तत्सम्बन्धेनैव गृहादेर्दुष्टत्वात् ।
'द्रव्याणि स्वामिसम्बन्धात्तदघे त्वशुचीनि वै । स्वामिशुद्ध्यैव शुद्ध्यन्ति
वारिणा प्रोक्षितान्यपी'ति तच्छुद्ध्यैव द्रव्यस्यापि शुद्ध्यभिधानाच्च ।
किञ्च, पितृवत्पुत्रस्यापि स्वामित्वाविशेषात्स्वगृहे स्वसुः प्रसवे दिनं
सूतकं भवति । तथा संस्कृताप्रसवनिमित्तस्य सूतकस्य पृथक्स्थानव्यव-
स्थया 'प्रसूतिर्मरणं गृहे' 'पितृगृहे चेत' इत्यादिवचनैः स्वगृहे प्रसू-
तिनिबन्धनत्वप्रतिपादनादन्यप्रसवे पितुरपि न किञ्चित्सूतकमस्ति ।
तथा– 'तद्बन्धुवर्गस्त्वेकेन' 'बन्धूनां मातुलादीना'मिति बन्धुत्वावल-
म्बनेनैव दिनविधानात्स्वगृहेऽन्यस्याः प्रसवे मरणे च नान्यस्य कि-
ञ्चिदप्यघमिति सिद्धम् । अत्र केचित्प्रसवार्थं स्वगृहं प्रति पुत्र्यानय-
नात्तदर्थार्थप्रदानेन तत्प्रसवधुरन्धरत्वाच्चान्यगृहे पुत्रीप्रसवे पितुस्त्र्यहं
दिनं वानुष्ठेयमिति वदन्ति । यथा लोकाचारस्तथानुष्ठेयम् ॥ श्रीः ॥

॥ **परोक्ष इति** ॥ परोक्षेऽसन्निधाने चेत्सन्निधौ प्रेतायाः पुत्र्याः
प्रेतयोर्वा पित्रोरन्नभोजने दशाहमाशौचम् । पुत्र्या मृतौ पित्रोः पित्रो-
र्मरणे पुत्र्याश्च । एवमुत्तरत्रापि मिथ इत्युक्तस्थलेषु द्रष्टव्यम् । अत्र
वसिष्ठः– 'पित्रोरुपरमे स्त्रीणामूढानां च कथं भवेत् । त्रिरात्रेणैव शुद्धिः
स्यादित्याह भगवान् यमः' पित्रोरुपरमे मृतौ स्त्रीणां पुत्रीणां त्रिरात्रेण
शुद्धिः । तासां मृतौ पित्रोश्च त्रिरात्रेणैव शुद्धिरित्येवकारार्थः ।

**दशरात्रं मृतौ पुत्र्याः पित्रोश्चान्योन्यमित्यघम् ।**
**पराश्रितायाा भार्याया मृतौ पत्युस्त्रिरात्रकम् ॥ ५५ ॥**

"त्रिरात्रेणैव तत्पिता" इत्यादिप्रजापतिस्मरणात् । पराश्रितायाः पुत्र्याः मरणेऽपि पितुस्त्रिरात्रं भवति । भरद्वाजश्च– 'पुत्र्यास्त्रिरात्रमाशौचं तत्र भोजने कृते दशाहं भवती'ति । अत्र यद्यपि, 'अघे भोक्तु'रिति पूर्वमेव प्रेतान्नभोजनाशौचमुक्तम् । तथापि, 'मम पुत्र्येव पचति । न पत्नी । न ह्यस्त्याशौचं पुत्र्या अतो भोक्तव्य'मिति लोकवादमोहनिरासार्थम् । प्रेतान्नभोजने दशरात्रमिति पुनर्ग्रहणमित्यदोषः । ब्राह्मे पुराणे च– 'शुचिस्तज्जनकस्त्रिभिः' इति । भरद्वाजोऽपि– "पितुस्त्र्यहमेव चे"ति । स्मृत्यन्तरे च– 'मातुले पक्षिणीं कुर्यान्मातापित्रोस्त्रिरात्रकम्' इति ॥ श्रीः ॥ ॥ पराश्रितायाा इति ॥

**पराश्रित भार्यामृतौ**

विवोढुर्व्यतिरिक्तपुरुषाश्रितायाा भार्याया मरणे विवोढुर्जारभर्तुश्च त्रिरात्रम् । तत्पक्षयोः परिणेतृजारपतिसपिण्डयोर्दिनम् । तयोर्भर्त्रोर्मरणे तस्याश्च त्र्यहम् । संस्थितिर्मृतिः । अत्र विष्णुः– "परपूर्वासु भार्यासु प्रसूतासु मृतासु च" त्रिरात्रमिति प्रकृतम् । एतच्च त्र्यहविधानं प्रतिलोमव्यतिरिक्ताश्रये । तदाश्रये तु "स्वैरिण्यनाश्रय"मित्युक्तं सद्यश्शौचमेव । (भर्तृघ्न्यः कामगादिकाः प्रतिलोमगा । 'धर्मपत्नीनामित्यादिस्मृतेः)(?) । हारीतश्च– "परपूर्वासु भार्यासु पुत्रेषु च कृतेषु च । मातामहे त्रिरात्रं स्यादेकाहं तु सपिण्डतः" एतच्च सन्निधौ परोक्षे तु दिनमेव । तथा याज्ञवल्क्यः– 'अनौरसेषु पुत्रेषु भार्यास्वन्यगतासु च' अत्र चशब्दः



**तत्पक्षयोर्दिनं तस्यास्त्र्यहं भर्त्रोश्च संस्थितौ ।**
**भागिनेये च दौहित्रे मृते तु त्र्यहमिष्यते ॥ ५६ ॥**

'अहस्त्वदत्तकन्यासु' इत्युक्ताहोरात्रं समुच्चिनोति । अत्र सपिण्डानां स्नानमेव । 'गोत्रिणः स्नानशुद्धाः स्यु'रिति प्रजापतिस्मरणात ॥ श्रीः ॥

॥ **भागिनेये चेति** ॥ स्पष्टोऽर्थः । अत्र वसिष्ठः–

**दौहित्रादिविषये**

'संस्थिते पक्षिणीं रात्रिं दौहित्रे भगिनीसुते । संस्कृते तु त्रिरात्रं स्यादिति धर्मो व्यवस्थितः' भगिनीसुतः स्वस्रीयः । दौहित्रभागिनेययोः सम्बन्धिशब्दत्वात् तत्प्रतियोगिनां मातामहमातृष्वसृमातुलानामेवेदमाशौचम् । अत्र भागिनेयदौहित्रयोर्मृतौ व्रतात्प्रागपि पक्षिणीविधानात् । अन्ययोनिसम्बन्धमृतौ पूर्वं न किञ्चिदप्याशौचमस्ति । वक्ष्यति च– 'ऊर्ध्वमेवोपनीतेः' इति । एवं च स्वस्रीयस्य मृतावेव व्रतात्प्राङ्मातृष्वसृमातुलयोः पक्षिणीविधानादनुपनीतयोस्तयोर्मृतौ तस्य सद्यः शौचमेवेति ग्राह्यम् ॥ ॥ श्रीः ॥ ॥ **श्वश्रूश्वशुरेति** ॥ स्वशब्दः

**श्वश्र्वादि विषये**

श्वश्रूश्वशुरव्यवच्छेदार्थः । आचार्या उपनेत्रादयः । शिष्य इति मनूक्तलक्षणः । ऋत्विग्लक्षणं च स एवाह– "अग्न्याधेयं पाकयज्ञानग्निष्टोमादिकान् मखान् । यः करोति वृते यज्ञे तस्य ऋत्विगिहोच्यते" अत्र विशेषमाह नारदः– 'ऋत्विक्तु त्रिविधो दृष्टः पूर्वैर्जुष्टः स्वयंवृतः । यदृच्छया च यः कुर्यात् आर्त्विज्यं प्रीतिपूर्वकम्' ऋत्विक्प्रतियोगी याज्यः । अन्तेवासी 'शिष्यश्च दासभृतका'वित्यत्रोक्तलक्षणः । उपनीयाध्यापितश्च । तत्प्र-

पक्षिण्युपनयात्पूर्वं वसिष्ठो मुनिरब्रवीत् ।
श्वश्रूश्वशुरस्वाचार्यतत्पत्नीतत्सुतर्त्विजाम् ॥ ५७ ॥

तियोगी आचार्यः । एषां मरणे तत्प्रतियोगिनां त्र्यहम् । अत्र बोधायनः– 'यथासन्नं त्रिरात्रमहोरात्रमेकरात्रमिति कुर्वीत' आचार्य उपाध्यायः । तत्पुत्रेषु त्रिरात्रमृत्विजां च । गौतमोऽपि– ''त्र्यहं वा आचार्यतत्पुत्रस्त्रीयाज्यशिष्येषु चैव''मिति । बृहस्पतिश्च– 'त्र्यहं मातामहाचार्यश्रोत्रियेष्वशुचिर्भवेत्' प्रचेताश्च– 'मातृष्वसामातुलयोः श्वश्रूश्वशुरयोर्गुरौ । मृते चर्त्विर्ज्ययाज्ये च त्रिरात्रेण विशुद्ध्यति' गुरुरत्राचार्यः । पूर्वजुष्टस्वयंवृतयोः ऋत्विजोरेव त्र्यहविधानम् । यादृच्छिकस्य तु सद्यश्शौचस्य वक्ष्यमाणत्वात् । स्मृत्यन्तरे च– 'मातृष्वसामातुलयोः श्वश्रूश्वशुरयोर्गुरौ । तत्पुत्रस्त्रीषु याज्ये च मृते मातामहे त्र्यहम्' व्यासः– 'आशौचं तु त्रिरात्रं स्याच्छ्वश्रूश्वशुरयोर्मृतौ । जीवन्त्यामेव भार्यायां मृतायां दिवसाच्छुचिः ॥ मातृष्वसृपितृभ्रातृमृतौ तत्प्रतियोगिनः । पुंसस्त्र्यहं मातुलानीमातामह्योर्मृतौ तथा' मातुर्जनन्याः सपत्न्याः । तद्विषये विशेषस्य वक्ष्यमाणत्वात् । स्वसा च पिता च भ्राता च स्वसृपितृभ्रातरः मातृष्वसृमातामहमातुलास्तेषां मृतौ, तथा मातुलानीमातामह्योर्मृतौ च, तत्प्रतियोगिनः पुरुषस्य त्र्यहमघं भवति । मातृष्वसृमातुलानीमृतौ स्वस्रीयस्य, मातामहमातामहीमरणे दौहित्रस्य च त्र्यहमित्यर्थः । अत्र पुङ्ग्रहणं स्त्रीव्युदासार्थम् । स्मृत्यन्तरे– 'मातृष्वसामातुलयो'रिति । प्रचेताश्च– 'मातृष्वसामातुलयो'रिति । एवं च त्र्यहविधानं सन्निधावेव । श्वशुरयोश्च भगिन्यां च



याज्यान्तेवासिनोर्नाशे त्र्यहमित्याह गौतमः ।
मातृष्वसृपितृभ्रातृमृतौ तत्प्रतियोगिनः ॥ ५८ ॥
पुंसस्त्र्यहं मातुलानीमातामह्योर्मृतौ तथा ।
मातृष्वसृसुतापुत्रौ पितृष्वसृसुतस्त्रियौ ॥ ५९ ॥

मातुलान्यां च मातुले । पित्रोः स्वसरि तद्वच्च पक्षिणीं क्षपयेन्निशाम्' इति परोक्षे पक्षिणीविधानात् । अत्र मातृष्वसृमातृग्रहणं तद्भ्रातृव्युदासार्थं पितृष्वसृनिरासार्थं च । मातामहीमातुलान्योः पृथग्ग्रहणं सपिण्डसपत्नीनामिव भर्तृमरणादूर्ध्वमपि प्रतियोगिमृतौ तयोस्तयोर्मृतौ तत्प्रतियोगिनां च परस्परं पक्षिण्याशौचप्राप्त्यर्थम् । अङ्गिराः– 'मातामहमातुलमातामहीनां त्रिरात्रेण श्वशुरस्य च' श्रीविष्णुरपि– 'आचार्ये मातामहेऽतीते त्रिरात्रेण' ॥ श्रीः ॥ विवाहात्प्राक् यत्स्त्रीमृतौ यान् प्रति सद्यश्शौचादि विहितं तदूर्ध्वं तत्स्त्रीमृतौ तत्प्रतियोगिनां तत्प्रतियोगिमृतौ तासां च मिथः पक्षिण्याशौचमाह श्लोकद्वयेन– ॥ मातृष्वसृसुतेति ॥ मातृष्वसृसुता दशजना एभ्योऽन्ये तत्प्रतियोगिनो द्वादश । तेषु त्रयोविंशतिजनेषु एकस्मिन् जाते मृते परस्परं पक्षिण्याशौचिनः स्युः । 'प्रेते पक्षिण्याशौचिन' इत्युक्तत्वात् । जनने नैव पक्षिण्याशौचिनः स्युः । अत्र मातृष्वसृसुतापुत्रयोः प्रतियोगिनौ ज्येष्ठमातृष्वसृपुत्रीपुत्रौ । पितृष्वसृसुतादुहित्रोः प्रतियोगिनौ मातुलस्य पुत्रीपुत्रौ । स्वसुः प्रतियोगिनौ भ्रातृपुत्रीपुत्रौ । भ्रातृपुत्र्याः प्रतियोगिनौ पितृष्वसृपितृव्यौ । दौहित्र्याः प्रतियोगिनौ मातामहौ । पुत्र्याः प्रतियोगिनौ पितामहौ । अत्र मातृष्वस्रादिस्त्रीत्वावलम्बनेन पक्षिणीविधा-

**स्वसा पितृव्यपुत्री च स्वसृपुत्री पितृष्वसा ।**
**भ्रातृपुत्री च दौहित्री पौत्री तत्प्रतियोगिनौ ॥ ६० ॥**

नात् । तत्तद्भ्रातृमरणे पक्षिणी नास्त्येव । बन्धुत्वात्स्नानं तु स्यात् । विज्ञानेश्वरे– 'भगिन्यां संस्थितायां तु भ्रातर्यपि च संस्थिते । स्वस्रीये भ्रातृपुत्रे च पक्षिणीं क्षपयेन्निशाम्' पैठीनसिश्च– 'मातृष्वसृतत्सुतदुहित्रोः पक्षिणी परस्परम्' स्मृत्यन्तरे च– "सोदर्याश्च सुतायाश्च व्यूढायाः पक्षिणी भवेत्" हारीतश्च– 'पित्रोस्तत्सहजो यस्तु पक्षिणी' पित्रोश्च तत्सजो मातापितृसहजो मातुलमातृष्वसृपितृव्यपितृष्वसृसंज्ञो यो जनः । तस्य च तत्प्रतियोगिनां च मिथः पक्षिणीत्यर्थः ( पक्षिणी अहर्द्वयमध्यगतरात्रिर्वा रात्रिद्वयमध्यगतमहर्वेति कालत्रययुक्ता ) 'आगामिवर्तमानाहर्युक्तायां निशि पक्षिणी'त्यमरः । स्मृत्यन्तरे च, (योनिसम्बन्धा 'मातुलमातुलेयमातृष्वसृमातृष्वस्रेयस्वसृस्वस्रीयपितृष्वसृपैतृस्वस्रेयादयः) । अत्र ये कन्यासपिण्डाः ते विवाहादूर्ध्वं भर्तृगोत्रप्राप्त्या असपिण्डा भवन्तीति त एवासपिण्डशब्देनोच्यन्ते । ते च पितृमातृभ्रातृपितृव्यतत्पुत्रादयः । असपिण्डाश्च ते योनिसम्बन्धाश्चेति द्वन्द्वैकवद्भावः । असपिण्डे समानोदके योनिसम्बन्धे च मातृपितृमातृष्वसृतदपत्यादौ पक्षिण्याशौचं भवती'ति व्याख्यातम् । तद्व्याख्याने तदा समानोदकविषये पक्षिणीविधिः परोक्षविषय एव । योनिसम्बन्धोऽत्र त्रिपुरुषविषय एव । अतः कूटस्थमिथुनोत्पन्नाः कूटस्थसहजाः । कूटस्थयोनित्वात्कूटस्थभ्रातृसहिताश्च पक्षद्वयेऽपि त्रिपुरुषान्तर्वर्तिनोऽसपिण्डयोनिसम्बन्धाः परस्परं पक्षिणीमाचरेयुरित्यर्थः । अनेन पक्षद्वयेऽपि



पक्षिणीविधिर्विवाहादूर्ध्वमेव । तत्पूर्वं पितृपक्षे सद्यश्शौचादिविधानात् । मातृपक्षे स्नानमात्रस्मरणाच्च । अतो यन्मरणे यद्विषये पक्षिणी विधीयते तयोरन्यतरस्यान्यतरस्य वा उपनयनात्प्राङ् स्यादयं विधिरिति सिद्धम् ॥ किञ्च, भर्तृसमानयोगक्षेमत्वाद्योनिबन्धुपत्नीनां च पक्षिणी भवति । योनिसम्बन्धनिबन्धनेनैव पक्षिणीविधानात् । पत्नीनां च तदभावात् । तासां मृतौ तत्प्रतियोगिनां नायं विधिर्भवति । अत एव मातामहमातुलान्यादेः पृथग्ग्रहणम् । पुनरप्यत्र मया विशेषतो व्यक्तमुक्तान्यनवद्यानि पद्यानि– 'मातृष्वसा मातुलश्च स्वसा भ्राता पितृष्वसा । पञ्च तत्तत्सुतापुत्रा दश पौत्री पितामहः ॥ मातामहश्च दौहित्री पितृव्यस्तत्सुतात्मजौ । द्वाविंशतिजनाश्चैते परोक्षे दुहितापिता ॥ दौहित्रश्च त्रयश्चैते तत्तत्पत्न्यस्त्रयोदश । स्त्रीमृतौ पक्षिणीभाजौ ह्यष्टत्रिंशदिति स्थितिः ॥ मातृष्वसृपितृष्वस्रोः पुत्रीपुत्राश्च तत्स्त्रियौ । पितृष्वसा स्वसा पुत्री भ्रातृपुत्री स्वसुः सुता ॥ पितृव्यपुत्री दौहित्री मातुलस्य सुतासुतौ । तत्स्त्री चासन्निधौ पुत्रीस्वस्रोः पुत्रौ च तत्स्त्रियौ ॥ क्वचिच्च मातुः पितरौ स्वसा च भ्रातृतत्स्त्रियौ । पक्षिण्याशौचिनस्त्वेते पुम्मृतौ पञ्चविंशतिः ॥ मातृतः पितृतो येषु विहिता पुंसु पक्षिणी । न तत्पत्नीमृतौ सा स्यात्स्नानमात्रं विधीयते' मातृष्वस्रेयादिपत्नीग्रहणं तद्भर्तृमृतेरूर्ध्वमपि तासां पक्षिणीप्राप्त्यर्थम् । तत्तच्छब्दवीप्सया मातृष्वस्रेयादयः पञ्च परामृश्यन्ते । तत्तत्पत्न्यः मातृष्वसृपितृमातुलतत्पुत्रीस्वस्रीयभ्रातृतत्पुत्रपैतृष्वस्रेयपितामातामातामहपितृव्यतत्पुत्रपितृदौहित्रपत्न्य इत्यर्थः । क्वचित् 'पक्षिण्युपनया'दित्युक्तभागि-

**स्त्रीपुंसौ च कचित्प्रेतौ पक्षिण्याशौचिनौ मिथः ।**
**भिन्नपित्रोः पितृभ्रातृस्वस्रपत्यानि तत्प्रजाः ॥ ६१ ॥**

नेयदौहित्रमृतिविषये असन्निधौ चेत्यर्थः ॥ श्रीः ॥ ॥ **भिन्न पित्रोरिति** ॥ भिन्नपित्रोर्जारपितृतत्पत्न्योः ।

**भिन्नमातापित्रादिविषये**

पितृशब्दो मातापितृवाचकः । 'पिता मात्रे'त्यनुशासनात् । अपत्यशब्दः स्त्रीपुरुषसमुदायवाची । तेन भिन्नपित्रोर्मातापितृस्वस्रपत्यानि स्वसृपुत्रीपुत्रास्तत्प्रजाः तच्छब्देन पित्राद्यपत्यपर्यन्ता जनाः परामृश्यन्ते । प्रजाशब्दः स्त्रीपुरुषसमुदायवाची । एतेष्वन्यतरमरणे अन्ये दिनेन शुध्यन्ति । तथात्रिः— 'भिन्नमातृष्वसुर्भिन्नपितृष्वसुरहः स्मृतम् । तत्सुतानामथाहश्च मरणे भृगुरब्रवीत्' अत्र भिन्नमातापित्रोरप्यहरिति ग्राह्यम् । तेन भिन्नमातृष्वसृभिन्नपितृष्वसृ तत्सुतदुहितृ भिन्नमातापितृ तत्सुतदुहितॄणामहोरात्रं भवतीत्यर्थः । आवृत्त्यान्योऽप्यर्थः । (पितृव्येऽपि लोके पितृत्वबुद्धेर्भिन्नपितृशब्देन सपत्नीमातृभिन्नोदरपितृव्या उच्यन्ते ) पितृशब्देन मातामहावेव भ्रातृशब्देन मातुलोऽपि पितामहपितृव्ययोः सपिण्डत्वेन दशरात्रत्वात् । स्वसृशब्देन मातृष्वसृपितृष्वसा च । अपत्यशब्देन च सपत्नीमातृदुहितैव । एषामपत्यान्येव तत्प्रजाशब्देनोच्यन्ते । तेषां मिथः परस्परमहरिति । पारस्करश्च— 'या सपत्नीसुता मातृसपत्नी या च ते मिथः । अहोरात्रेण शुध्येतामाह पारस्करो मुनिः' याज्ञवल्क्यश्च— 'अहस्त्वदत्तकन्यासु बालेषु तु विशोधनम् । गुर्वन्तेवास्यनूचानमातुलश्रोत्रियेषु च' अत्र मातुलग्रहणं योनिबन्धूपलक्षणम् ।



**शुध्यन्त्यह्ना मिथः शावे जनास्तत्प्रतियोगिनः ।**
**ऊर्ध्वमेवोपनीतस्य त्र्यहं पक्षिण्यहर्विधिः ॥ ६२ ॥**

"मातुलग्रहणेनात्मबान्धवाः पितृबान्धवा मातृबान्धवाश्चोपलक्ष्यन्ते" इति विज्ञानेश्वरेणोक्तत्वात् । यद्यप्यहर्विषये भिन्नमातुलादिविषयत्वं न प्रतीयते । तथापि परोक्षे साक्षान्मातुलविषये पक्षिणीस्मरणात्प्रत्यक्षे त्र्यहविधानाच्च तद्विषयत्वमस्यावगम्यते । अत्रात्रेयमनुसन्धेयम्— 'भिन्नमातृष्वसु'रिति । तस्यार्थद्वयसम्भवात् । अत्र मातृष्वसुः सपत्नीपितृष्वसुः सपत्नी च भिन्नमातृष्वसा भिन्नपितृष्वसा च भवती'ति । 'तयोस्तत्सुतानां चाह'रित्यत्रिवचनार्थमन्ये मन्यन्ते । यदत्र युक्तं तद्ग्राह्यम् । एवं च सपत्न्याः सपत्नीमातृपितृवर्गाशौचं नास्त्येव । बन्धुत्वद्वाराच्च स्नानं तु भवति ॥ श्रीः ॥ अत्र त्र्यहाद्याशौचव्यवस्थामाह— ॥ **ऊर्ध्वमेवेति** ॥ योऽयं समानोदकयोनिसम्बन्धसगोत्रविषये त्र्यहपक्षिण्यहविधिरुक्तः । सविधिरुपनयनादूर्ध्वमेव भवति । प्राक्तु सद्यः शौचमेव । अत्र योनिसम्बन्धविषये सद्यःशौचविधिरुपनीतमातृष्वसृमातुलादिमृतिविषयः । न तु दौहित्रभागिनेयमृतिविषयः । व्रतात्प्रागपि तत्र पक्षिणीविधानात् ॥ श्रीः ॥ ननु स्त्रीणामुपनयाभावात्कथमित्थं व्यवस्था तद्विषये? इत्यत आह— ॥ **उद्वाह इति** ॥ 'वैवाहिको विधिः स्त्रीणामौपनायनिकः स्मृतः' इति मनुस्मरणात् । स्त्रीणामुद्वाह एवोपनय इत्यर्थः । स्मृत्यन्तरे च— "पक्षिणी योनिसम्बन्धे नातिकालेन सूतके । नोपनीतेरधः पुंसो न पाणिग्रहणात् स्त्रियाः" योनिसम्बन्धो मातृवर्ग्यः । गौतमोऽपि— 'पक्षिणीमसपिण्ड-

**प्राक्सद्यःशौचमुद्वाहः स्त्रीणामुपनयो मतः ।**
**बन्धौ स्नानं सगोत्रेऽहर्ज्ञेयं सम्बन्धके मृतौ ॥ ६३ ॥**

योनिसम्बन्धे' अयमर्थः, उपनयात्प्राक्सापिण्ड्यसत्वेन पक्षिणीविध्यभावात् । 'आ जन्मनस्तु चौलान्त'मित्यादिभिः सद्यःशौचविधानात् । परन्तु गोत्रनिवृत्त्या सापिण्ड्याभावात् परमेव पक्षिण्याशौचं भवतीति । याज्ञवल्क्यश्च— 'बाले देशान्तरस्थे चे'ति । मनुरपि— "बाले मृते सपिण्डानां सद्यःशौचं विधीयते" अत्र बालोऽनुपनीतमातुलादिः । गौतमश्च— 'प्रव्रजितासपिण्डानां सद्यःशौच'मिति । असपिण्डः समानोदकः ॥ श्रीः ॥ दिनविधिमाह— ॥ **बन्धौ स्नानमिति** ॥ पितृपक्षे मातृपक्षे च ज्ञायमानसम्बन्धके बन्धुजने मृते स्नानं भवति । सगोत्रे तु तादृग्विधे मृतेऽहोरात्रम् । तथा देवलः— "समानोदकानां त्र्यहं गोत्रजानामहः स्मृतम्" जाबालिश्च— 'सगोत्राणामहः स्मृतम्'

**बन्धुमरणे सगोत्रे च**

आपस्तम्बोऽपि— 'मातुश्च योनिसम्बन्धेभ्यः पितुश्चा सप्तमात्पुरुषाद्यावता वा सम्बन्धो ज्ञायते । तेषां प्रेतेषूदकोपस्पर्शनं *गर्भान् परिहाप्यापरिसंवत्सरान्' । एतच्चापरिपूर्णवत्सरं बालमृतिविषयस्नानवर्जनस्मरणं पक्षद्वयेऽपि आ जन्मनस्तु चौलान्तं सद्य इति सपिण्डानां स्नानविधानात्तद्व्यतिरिक्तबालमृतिविषयम् ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥

* अपरिसंवत्सरानपरिपूर्णसंवत्सरानसपिण्डबालान् परिहाप्य वर्जयित्वा ज्ञायमानसम्बन्धे बन्धौ मृते स्नानमित्यर्थः ।



**सब्रह्मचारिण्येकाहं सहाध्यायिनि पक्षिणी ।**
**उपाध्यायसुहृत्स्यालभूभृत्सु च मृतेष्वहः ॥ ६४ ॥**

**सब्रह्मचार्यादिषु**

॥ **सब्रह्मचारिणीति** ॥ एकाचार्योपनीतः सब्रह्मचारी सहाधीतवेदैकदेशश्च । सहाधीतकृत्स्नवेदः सहाध्यायी । वेदस्य वेदाङ्गानां वा एकदेशाध्यापयिता उपाध्यायः । श्यालः पत्नीभ्राता । भूभृन्मण्डलाधिपः । अत्र गौतमः— 'पक्षिणीमसपिण्डयोनिसम्बन्धे सहाध्यायिनि ब्रह्मचारिण्येकाहम्' आश्वलायनोऽपि— 'एकाहं सब्रह्मचारिणि' मनुरपि— 'सब्रह्मचारिण्येकाहमतीते क्षपणं स्मृतम् । मातृबन्धौ गुरौ मित्रे मण्डलाधिपतौ तथा' गुरुरत्रोपाध्यायः । "अल्पं वा बहु वा यस्य श्रुतस्योपकरोति यः । तमपीह गुरुं विद्याच्छ्रुतोपक्रियया तथा" इति मनुस्मरणात् । एतच्च नृपे दिनविधानं सन्निधावेव । परोक्षे त्वेककालतः । तथा याज्ञवल्क्यः— 'निवासराजनि* प्रेते तदहःशुद्धिकारणम्' मनुरपि— "प्रेते राजनि सज्योतिर्यस्य स्याद्विषये स्थितः" सज्योतिर्दिवा आनक्षत्रदर्शनम् । निशि मृतश्चेदासूर्यदर्शनमित्यर्थः । बोधायनोऽपि— 'शिष्यसतीर्थ्यब्रह्मचारिषु त्रिरात्रमेकरात्रमहोरात्रम्' सतीर्थ्य एकाचार्योपनीतः । सब्रह्मचारी सहाधीतवेदैकदेशः । विष्णुरपि— '†उपाध्यायमातुलश्वशुर्ये-

* निवासः स्वदेशः तस्य यो राजा स्वामी स यस्मिन्नहन्यतीतः तदहर्मात्रं शुद्धिकारणम् । रात्रौ चेदतीतः तदा रात्रिमात्रम् ।

† चन्द्रिकायाम्— 'एकदेशं तु वेदस्य वेदाङ्गान्यथ वा पुनः । योऽध्यापयति वृत्त्यर्थं स उपाध्याय उच्यते' इति ।

**श्वश्रूश्वशुरतत्पुत्रयाज्याचार्यसुतर्त्विजाम् ।**
**उपाध्यायस्य सद्यः स्यान्मृतौ तत्प्रतियोगिनाम् ॥ ६५ ॥**

ष्वहः' विज्ञानेश्वरे च– "सब्रह्मचारिणि प्रेते उपाध्याये तथैव च ।
श्वशुरस्य सुते प्रेते अहोरात्रेण शुध्यति" इति ॥

**सद्यःशौचम्** इदानीं सद्यःशौचप्रकरणमुच्यते– सद्यःशौचं नाम स्नानमात्रापनोद्यमाशौचं स्नानान्तमाशौचमित्यर्थः । तथाङ्गिराः– 'सद्यःशौचे तु तावत्स्यादाशौचं संस्थितस्य तु । यावत् स्नानं न कुर्वन्ति सचेलं बान्धवा बहिः' संस्थितस्येत्युक्तत्वात् प्रसवे तदतिक्रमे च पितृव्यतिरिक्तस्य न स्नानम् ॥ ६४ ॥

**श्वश्र्वादीनां सद्यःशौचम्** ॥ श्वश्रूश्वशुरेति ॥ श्वश्र्वादिप्रतियोगिनां मृतौ श्वश्र्वादीनां सद्यःशौचं स्यात् । श्वश्रूश्वशुरौ प्रसिद्धौ । तयोः प्रतियोगी जामाता तत्पुत्रः । श्यालस्तत्प्रतियोगी स्वसुर्भर्ता । आचार्यपुत्रोपाध्याययोः प्रतियोगी शिष्यः । ऋत्विग् याजकः । तत्प्रतियोगी याज्यः । पूर्वजुष्टस्वयंवृतयोस्तत्प्रतियोगिनो याज्यस्य च मिथः त्र्यहस्योक्तत्वात् । अत्र वृद्धयाज्ञवल्क्यः– 'मित्रे जामातरि प्रेते दौहित्रे भगिनीसुते । श्याले च तत्सुते वापि सद्यः स्नानेन शुध्यति ॥ शिष्ये पञ्चत्वमापन्ने शुचिर्नक्षत्रदर्शनात्' मित्रविषये सद्यःशौचमसन्निधौ, सन्निधौ तु दिनविधानात् । दौहित्रभागिनेयमृतौ मातामहमातुलविषये सद्यःशौचविधिर्विदेशस्थानुपनीतमृतिविषयम् । प्रत्यक्षे व्रतात्प्रागपि पक्षिणीविधानात् श्यालविषये स्नानविधिः परोक्षे । शिष्योऽत्रोपाध्यायप्रतियोग्येव । अन्तेवासिविषये



**राष्ट्रक्षोभे च दुर्भिक्षे व्याधावित्यादिकापदि ।**
**सद्यःशौचं भवेदापन्निस्तरोपायकर्मसु ॥ ६६ ॥**

त्र्यहविधानात् । शिष्यविषये 'शुचिर्नक्षत्रदर्शना'दित्युपाध्याय एककालोक्तिः शिष्यप्रेतानुगमनविषया 'अहःशेषं बहिर्वासो यावन्नक्षत्रदर्शन'मिति स्मरणात् ॥ ६५ ॥

**राष्ट्रक्षोभादौ** ॥ राष्ट्रक्षोभ इति ॥ व्याधौ रोगे । इत्यादिकापदि देशभ्रंशगृहोपतापमहोत्पातादिकापदि । आपन्निस्सरणार्थक्रियमाणेषु कर्मसु सद्यःशौचम् । 'आपन्निरसनोपायकर्मस्वि'त्युक्तत्वादन्यकर्मस्वाशौचमस्तीति मन्तव्यम् । सर्वत्राशौचसङ्कोचस्यापदुपाधिकत्वात् । तथा दक्षः– 'स्वस्थकाले त्विदं सर्वं सूतकं समुदाहृतम् । आपद्गतस्य सर्वस्य सूतकेऽपि न सूतकम्' ब्राह्मे पुराणे च– 'दुर्भिक्षे प्राणरक्षार्थं कृतयत्नस्य देहिनः । राष्ट्रभ्रंशे स्थितस्यापि पुत्रदारांश्चरक्षितुः विभ्रष्टस्य स्वदेशाच्च अन्यदेशपरिग्रहे । गृहोपतापे घोरे च दारुणायामथापदि ॥ गृहोपतापशान्त्यर्थं क्रियमाणे च कर्मणि । शीतवातातपैर्यत्र ह्यद्य वै मरणं भवेत् । तत्रोपसर्गास्त्वं देहं रक्षमाणस्य किं भवेत्' अद्यमिति प्रकृतम् । उपसर्गाद्देशविस्फोटनादिभिरुपप्लवात् । पराशरश्च– 'दुर्भिक्षे राष्ट्रसम्भ्रान्तावापदां च समुद्भवे । उपसर्गमृतौ चैव सद्यःशौचं विधीयते' उपसर्गः स्वगृहैकदेशस्थितो बन्धुव्यतिरिक्तस्तन्मृतौ गृहस्वामिनः सद्यःशौचं विधीयते । यद्वा अकामात् क्षामक्षोभाद्युपप्लवमृतौ सपिण्डानां सद्यःशौचमित्यर्थः । (पुराणे च– 'गोमङ्गलादौ वैश्यानां कृषिकालात्ययेष्वपि । आशौचं न भवेल्लोके सर्वत्रान्यत्र विद्यते' इति) ॥ ६६ ॥

**गोविप्रस्त्रीकृते प्रेते राज्यार्थे वा हते युधि ।**
**शौचं चोर्ध्वक्रियाः सद्यो यद्यनिच्छास्त्यघं मृतौ ॥ ६७॥**

॥ **गोविप्रस्त्रीकृत इति** ॥ राजनि वा राजभृत्ये वा गोब्राह्मणस्त्रीविषये युद्धे शस्त्रेण हते सति सद्यःशौचं दाहादिसपिण्डान्ता आकृष्य सद्यः स्युः । मृतौ मृतिविषये यदिच्छाभावः । केवलं राजदण्डभयाद्वा भृतिप्रत्यादानभयाद्वा येन केनापि युद्धभूमिं गतस्य मरणेच्छारहितस्य दुर्मृतत्वादन्वक्षाशौचमस्ति । कालान्तर एवोदकक्रिया च कार्या । अत्र मनुः— 'राज्ञो माहात्मिके स्थाने सद्यःशौचं विधीयते' 'गोब्राह्मणस्य चैवार्थे यस्य चेच्छति भूमिपः' बृहस्पतिश्च— 'शस्त्रेणाभिमुखो यस्तु वध्यते क्षत्रकर्मणा । यज्ञः सन्तिष्ठते तस्य सद्यःशौचं विधीयते' यज्ञः पितृमेधाख्यः । ब्राह्मे पुराणे च— "ब्राह्मणार्थे गवार्थे वा भूम्यर्थे वा नियुज्यते । राज्ञो वा राजभृत्यस्य सत्वोद्रिक्तस्य सङ्गरे ॥ सम्मुखस्य हतस्यापि सद्यः श्राद्धक्रिया भवेत् । राज्ञः स्वर्गो भवेत्तस्य भृत्यानां च परिक्षयात्" सत्वोद्रिक्तस्य सङ्गर इत्युक्तत्वात्कर्तुर्मरणं 'शस्त्रेण वध्यते' इति स्मरणाच्च । मरणानिच्छोरभिमुखस्यावीरस्य मृतौ कालान्तर एवोदकक्रियाशौचं चेत्यर्थो लभ्यते । सुमन्तुः— 'गोब्राह्मणगुर्वर्थानां मृतानाम्' मनुश्च— 'उद्यतैराहवे शस्त्रैः क्षत्रधर्महतस्य च । सद्यः सन्तिष्ठते यज्ञः तथाशौचमिति स्मृतम्' 'ब्राह्मणार्थे विपन्ना ये योषितां गोगृहेऽपि वा' इति ॥ ६७ ॥

अनिच्छा मरणे

युद्धादिहतस्य



**एकरात्रं भवेद्युद्धक्षतैः कालान्तरे मृतौ ।**
**अन्वक्षं शृङ्गिचोरान्त्यविद्युच्छस्त्रविषाग्निभिः ॥ ६८ ॥**

अत्र विशेषः— ॥ **एकरात्रमिति** ॥ यस्तु क्षत्रधर्मेण युद्धाभिमुखः शस्त्रहतस्तस्मिन् युद्धजनितशस्त्रक्षतैर्दिनान्तरे मृते दिनमाशौचम् । तथा विज्ञानेश्वरे— 'आहवेषु हतानां च एकरात्रमशौचकम्' इति ॥

॥ **अन्वक्षमिति** ॥ शृङ्गिणः महिषीपशुगजादयः । शृङ्गिग्रहणं दंष्ट्रिणामप्युपलक्षणम् । दंष्ट्रिणो व्याघ्रादयः । अन्त्यश्चण्डालः । विषशब्देन स्वहननसाधनमसिपत्रवत्सनाभ्यादिकमुच्यते । प्रायो महाप्रस्थानं तच्चानशनम् । विषभक्षणं च क्रोधादिना यं कञ्चिदुद्दिश्य । आदिशब्देन प्रपतनोद्बन्धनादयो गृह्यन्ते । शृङ्गिदंष्ट्र्यादिभिः कामात् प्रवृत्तितो बुद्धिपूर्वप्रवृत्त्या मृते तत्सपिण्डानामन्वक्षमेवाशौचं भवति । यावत्प्रेतदर्शनं भस्मान्तमित्यर्थः । कामात्प्रवृत्तित इति प्रवृत्तेरेव बुद्धिपूर्वकत्वं व्याख्येयम् । न तु मरणस्य । न हि कश्चिन्मर्त्यो मर्तुमिच्छति । तस्माद्, 'अयमशनिर्गर्जति । गजो जिगमिषति । सर्पः प्रसरति । कुड्यं पिपतिषति । कूलं कषेयं नदी प्रवहति । दिवक्षन्नग्निर्जृम्भते । तत्र मार्गे चोरा व्याघ्राश्च बाधन्ते । शृङ्गिणो दंष्ट्रिणो जिघांसन्तश्चरन्ती'त्यादिकं दृष्ट्वापि श्रुत्वापि वा ये तावत्तत्र बुद्धिपूर्वं साहसात्प्रवृत्तास्तेषां मृतौ मन्त्रवत्संस्कारोदकक्रियानिषेधो द्रष्टव्यः । तत्र पराशरः— 'भृग्वग्निजलपातेषु देशान्तरमृतेषु च । बाले मृते च सन्यासे सद्यःशौचं विधीयते' गौतमश्च— 'अन्वक्षं राजक्रोधाचायुद्धे प्रायानशकशस्त्राग्निविषोदकोद्बन्धनप्रपतनैश्चेच्छ-

दुर्मृतिविषये

**प्रायानशनतोयाद्यैर्मृते कामात् प्रवृत्तितः ।**
**प्रमादाद्दुर्मृतौ सद्यः क्रियाशौचे समाचरेत् ॥ ६९ ॥**

ता'मिति । अयुद्धग्रहणं युद्धे क्षत्रकर्मणा हतस्य दुर्मृतित्वाभावज्ञापनार्थम् । इच्छतामित्युक्तत्वात्प्रमादमृतानामाशौचोदकदानविधिर्भवति । याज्ञवल्क्यश्च– "हतानां नृपगोविप्रैरन्वक्षं चात्मघातिनाम् । महीपतीनां नाशौचं हतानां विद्युता तथा" पराशरश्च– 'बाले देशान्तरस्थे च पतिते च यतौ मृते । सद्यःशौचं तथेच्छातो जलाग्न्युद्बन्धनादिषु' जलादिष्विच्छातः प्रवृत्तित इत्यर्थः । विज्ञानेश्वरे च– 'दर्पादिना चण्डालादीन् हन्तुं गतो यस्तैर्मारितस्तस्य' 'सर्वत एवात्मानं गोपायेत्' इति विध्युक्तक्रमनिमित्तः पिण्डोदकदानादिनिषेधः । एवं दंष्ट्र्यादिग्रहणाभिमुख्येन दर्पाद्गच्छतो मरणेऽयं निषेध इत्यनुसन्धेयमिति । अनेनैवाभिप्रायेण स्मृत्यन्तरे च– 'चण्डालादुदकात्सर्पाद्ब्राह्मणाद्वैद्युतानलात् । दंष्ट्रिभ्यश्च पशुभ्यश्च मरणं पापकर्मणाम्' तथा संवर्तदक्षौ– 'ये वेश्यापतयो विप्रा ये वा शूद्रान्नभोजिनः । ये चान्ये पापकर्माणस्तेषां भस्मान्तसूतकम् ॥ क्रियाहीनस्य मूर्खस्य कदर्यस्य तथैव च । ऋणग्रस्तस्य डम्भस्य भस्मान्तं सूतकं भवेत्' पापकर्माणः पातकिनः । क्रियाहीनो मूर्खो द्विजातिः । कर्महीनो नास्तिकः । कदर्यो मातापितृदारात्मपुत्रवञ्चको लुब्धः ॥ श्रीः ॥ अत्र विशेषः– ॥ प्रमादाद्दुर्मृताविति ॥ अबुद्धिपूर्वकजलाग्न्यादिदुर्मृतिः प्रमादाद्दुर्मृतिः । अत्र सद्यः अविलम्बेन क्रियाशौचे कुर्यात् । दाहादिसपिण्डान्ताः प्रेतक्रियाश्चाशौचं चानुतिष्ठेदित्यर्थः । वैधे शास्त्रादिचोदिते

प्रमादाद्दुर्मृतौ



प्रायादिमरणे त्र्यहमाशौचम् । अत्र क्रियाः प्रेतक्रियाश्च सद्यस्तदैव कुर्यात् । आदिशब्देन जलाग्निप्रवेशभृगुपतनादिकं गृह्यते । एतदुक्तं भवति, 'अत्यन्तानुष्ठानाशक्तजीर्णाङ्गाचिकित्सरोगाणां वृथाजीविनामग्निप्रवेशभृगुपतनानि वा महापथगमनं वा गच्छेन्न वृथाजीवितुमिच्छेत्' इति वृद्धगार्ग्यादिवचनविहिते बुद्धिपूर्वाग्निप्रवेशादिमरणे त्र्यहम्, तदानीमेव प्रेतकृत्यं च कुर्यादिति । तथा ब्राह्मे पुराणे– "प्रमादादपि निःशङ्कमकस्मादपि यो नरः । शृङ्गिदंष्ट्रिनखिव्यालविषविद्युज्जलाग्निभिः ॥ चण्डालैर्वाथ चोरैर्वा निहतो यत्र कुत्रचित् । तस्य दाहादिकं कुर्याद्यस्मान्न पतितस्तु सः" वृद्धगार्ग्यश्च– 'वृद्धः शौचस्मृतेर्लुप्तः प्रत्याख्यातभिषक्क्रियः । आत्मानं घातयेद्यस्तु भृग्वग्न्यनशनादिभिः ॥ तस्य त्रिरात्रमाशौचं द्वितीये त्वस्थिसञ्चयः । तृतीये तूदकं कृत्वा चतुर्थे श्राद्धमाचरेत्' अत्र घातयेदिति विधिः । तथा विज्ञानेश्वरे– 'अनुष्ठानासमर्थस्य वानप्रस्थस्य जीर्यतः । भृग्वग्निजलसङ्ग्रामैर्मरणं प्रविधीयते' अत एवाग्न्यादिमरणे त्र्यहाशौचस्मरणम्, अन्यत्र सद्यःशौचस्मरणात् । तथा प्रचेताः– 'डिम्भाशनिद्वन्द्वहतानां साग्निजलप्रविष्टानां सद्यःशौचम्' इति । डिम्भो जनसम्मर्दः । एतच्च बुद्धिपूर्वविषयम् । अन्यत्राशौचोदकक्रियाविधानात् । तथाङ्गिराः– 'अथ कश्चित्प्रमादेन म्रियेताग्न्युदकादिभिः । तस्याशौचं विधातव्यं कर्तव्या चोदकक्रिया' किञ्च, 'साध्वीनामेव नारीणामग्निप्रपतनादृते । नान्यो धर्मोऽस्ति विज्ञेयो मृते भर्तरि कर्हिचित्' इत्यग्निप्रवेशस्यापि शास्त्रविहितत्वात् । तत्रापि सपिण्डानां त्र्यहमेव । तथा ब्राह्मे– 'देशान्तरे मृते पत्यौ साध्वी तत्पादु-

काद्वयम् । निधायोरसि सश्रद्धा प्रविशेज्जातवेदसम् ॥ ऋग्वेदवाक्यात् स्त्री साध्वी न भवेदात्मघातकी । त्र्यहाशौचे तु निर्वृत्ते श्राद्धं प्राप्नोति शाश्वतम्' तथात्रैव विषये विशेषः आग्नेयपुराणे– 'विष्णोः कार्यं समुद्दिश्य देहत्यागो यदा कृतः । तदा वैकुण्ठमासाद्य मुक्तो भवति मानवः' वायव्यपुराणे च– 'देवकार्यपरो भूत्वा स्वतनुं यः परित्यजेत् । स याति विष्णोः सायुज्यमपि पातककृन्नरः' पाद्मे च– 'देवस्य धनधान्यार्थं भूषणाम्बरयोरपि । क्षेत्रारामगृहाद्यर्थं विवादं कुरुते यदा ॥ वैष्णवान्यो विशेषेण प्राणत्यागार्थमात्मनः । शास्त्रादिसाधनैरन्यैर्व्रणकृत्यादिकामतः ॥ तस्य वंशे मृताः सर्वे गच्छन्त्यानन्तिकं लयम्' आश्वमेधिके– "प्राणं त्यजति यो मर्त्यो मा प्रपन्नोऽपि मत्कृते । बालसूर्यप्रकाशेन व्रजेद्यानेन मद्गृहम्" भगवानपि– 'मन्निमित्तं कृतं पापमपि धर्माय कल्पते । मामनादृत्य धर्मोऽपि पापी स्यान्मदभावतः' श्रीनारदीये– 'विष्णुकार्यनिमित्तेन देहत्यागं करोति यः । परमेष्ठिपदं प्राप्य ब्रह्मसायुज्यमाप्नुयात्' वामनपुराणे च– 'रङ्गनाथं समाश्रित्य देहत्यागं करोति यः । स याति वैष्णवं लोकं पुनर्जन्म न विद्यते' इत्यादि द्रष्टव्यम् । किञ्च मनुः– 'यः कामतो महापापं नरः कुर्यात् कथञ्चन । न तस्य निष्कृतिर्दृष्टा भृग्वग्निपतनादृते' बृहद्यमः– "रेतः सिक्त्वा कुमारीषु स्वयोनिष्वन्त्यजासु च । सपिण्डापत्यदारेषु देहत्यागो विधीयते" उशनाः– 'अन्त्येन सह सम्पर्के भोजने मैथुने कृते । प्रविशेत् सम्प्रदीप्ताग्नौ मृत्युनासौ विशुद्ध्यति' व्यासः– 'बुद्धिपूर्वे कृते

देवतार्थ मरणे



**वैधे प्रायादिमरणे त्र्यहं सद्यश्च तत्क्रियाः ।**
**षण्ढपाषण्डपतितप्रव्रज्यावासिमोघजाः ॥ ७० ॥**

पापे देहत्यागो न संशयः' "अतिपातकिनस्त्वेते प्रविशेयुर्हुताशनम्" इत्याद्यात्महननं यत्र यत्र शास्त्रतो विज्ञायते । तत्र त्र्यहमाशौचं प्रेतकृत्यं च द्रष्टव्यमित्यलम् ॥ श्रीः ॥ **षण्ढपाषण्डेति** ॥ षण्ढः, न जुहोत्युचिते काले न स्नाति न ददाति च । पितृदेवार्चनाद्धीनः स षण्ढः परिकीर्तितः ॥ 'लिङ्गच्छेदः कृतो येन स षण्ढः पतितः स्मृत' इति माधवीयाद्युक्तलक्षणः ॥ 'ब्राह्मणाद्यास्तु ये वर्णाः स्ववर्णादन्यतो मुखाः । यान्ति ते नग्नसञ्ज्ञां तु हीनकर्मस्ववस्थिताः ॥ एते पाषण्डिनः पापा न ह्येतान् प्रलपेद्बुध' इति विष्णुपुराणोक्ताकारः पाषण्डः ॥ "भ्रष्टो यस्त्वाश्रमाचारात् पतितः सोऽभिधीयते" द्विजातिकर्मणो हीनः पतितः सम्प्रकीर्तितः । निगृहीताश्च ये राज्ञा चौर्यदोषेण कुत्रचित् ॥ परदारान् हरन्तश्च रोषात्तत्पितृभिर्हताः । असमाश्चैव सङ्कीर्णाश्चण्डालाद्यैश्च निग्रहम् ॥ कृत्वा तैर्निहता ये च चण्डालादीन् समाश्रिताः । गराग्निविषदाश्चैव पाषण्डा क्रूरबुद्धयः ॥ क्रोधात् प्रायं विषं वह्निं शस्त्रमुद्बन्धनं जलम् । गिरिवृक्षप्रपातं वा ये कुर्वन्ति नराधमाः ॥ कुशीलजीविनो ये च स्नानालङ्कारकारिणः । मुखेभगाश्च ये केचित् क्लीबप्राया नपुंसकाः ॥ ब्रह्मदण्डहता ये च ये चैवाब्राह्मणैर्हताः । महापातकिनो ये च पतितास्ते प्रकीर्तिताः' इति बृहन्नारदीयापस्तम्बब्राह्मपुराणोक्तरूपाः पतिताः ॥ प्रव्रज्यावासी सन्यस्य सन्यासधर्महीनः पतितः ॥ प्रव्रज्या-

षण्ढादि विषये

**स्वैरिण्यनाश्रमिस्तेनगर्भभर्त्रात्मघातिनः ।**
**नाशौचार्हास्तदा तूष्णीं दाह्याः पश्चात्तु मन्त्रतः ॥ ७१ ॥**

वासे वर्तमानो वा । मोघजो वृथाजातः । क्रियागुणाद्यैः कस्यचिदर्थस्य असम्पादकः ॥ ६८ ॥ ६९ ॥ ७० ॥

स्वैरिण्यः कुलटाः । एतच्च कुलटायाः सद्यःशौचं स्वैरचारे । 'एकाश्रये तु युक्ता स्त्री चे'त्युक्ताशौचं तस्या भर्तुश्च "पराश्रितायाः" इत्युक्ताशौचम् । अनाश्रमिणः, 'यस्तु सन्त्यज्य गार्हस्थ्यं वानप्रस्थो न जायते । परिव्राड्वापि मैत्रेय! स नग्नः परिकीर्तित' इति विष्णुपुराणोक्तलक्षणाः ॥ अत्रानाश्रमित्वदोषस्त्वधिकारस्य सम्भवेऽप्यविवाहे वेदितव्यम् ॥ अधिकारे सत्यकृताश्रमविशेषपरिग्रहा अनाश्रमिण' इति विज्ञानेश्वरेणोक्तत्वात् ॥ अत्र घातिशब्दो "द्वन्द्वाच्छ्रूयमाणः प्रत्येकमभिसम्बध्यते" गर्भघातिनो भर्तृघातिनः आत्मघातिन इति ॥ अत्र लिङ्गमविवक्षितम् । अनुपादेयत्वात् । एते पाषण्डादयो नाशौचार्हाः । 'उदकं पिण्डदानं च प्रेतेभ्यो यत् प्रदीयते । नोपतिष्ठति तत् सर्वमन्तरिक्षे विनश्यति" इत्यङ्गिरस्स्मरणात् ॥ पिण्डोदकक्रियाश्च न भवन्तीत्यर्थः । तेषां मरणे सपिण्डैराशौचं नानुष्ठेयं पिण्डोदकादि च न कार्यम् । अन्वक्षमित्यनुवृत्तेः स्नानं तु कार्यम् । एते षण्ढादयस्तदानीं तूष्णीं दाह्याः । पश्चात्तु कालान्तरे मन्त्रवद्दाह्याः । तथा बृहस्पतिः– 'विषोद्बन्धनशस्त्रेण यस्त्वात्मानं प्रमापयेत् । मृतोऽमेध्येन लेप्तव्यो नाग्निसंस्कारमर्हती'ति ॥ प्रजापतिश्च– 'गोब्राह्मणहतानां च विद्युता पार्थिवेन

**अनाश्रमिणः**



च । आत्मासुत्यागिनां चैव पतितानां तथैव च ॥ सर्पैर्हतानां विप्राणां पतितानां च कामतः । पाषण्डानाश्रितानां च प्रेतकर्म न विद्यते' 'नाग्निसंस्कारमर्हति' 'प्रेतकर्म न विद्यते' इति मन्त्रवद्दाहनिषेधः ॥ तथा हारीतः– 'ब्राह्मणेन वधे प्राप्ते चण्डालस्य करेण वा । आत्मनः शस्त्रनिहते शूद्रवद्दाहयेद्विजम्' शूद्रवदमन्त्रकमित्यर्थः ॥ अङ्गिराश्च– "कामतो मरणं प्राप्ते आस्ये मत्स्यं निवेशयेत् । ब्रह्मघ्नसममित्याहुः काष्ठवद्दहनं भवेत्" ब्राह्मे च– 'पतितानां न दाहः स्यान्नान्त्येष्टिर्नास्थिसञ्चयः । न चाश्रुपातः पिण्डो वा कार्यं श्राद्धादिकं क्वचित्' मनुश्च— "वृथा संस्कारजातानां प्रव्रज्यासु च तिष्ठताम् । आत्मासुत्यागिनां चैव निवर्तेतोदकक्रिया" दक्षश्च– 'महापातकिनां चैव तथा चैवात्मघातिनाम् । उदकं पिण्डदानं च न कुर्याच्छ्राद्धमेव च ॥ नोपतिष्ठति तत्सर्वं राक्षसं प्रविलुप्यते । चण्डालाद्यैर्हता ये च शृङ्गिदंष्ट्रिसरीसृपैः ॥ श्राद्धमेषां न कर्तव्यं ब्रह्मदण्डहताश्च ये' जाबालिश्च– 'पतितेऽनशने प्रेते विदेशस्थे शिशौ च न' याज्ञवल्क्यश्च– 'पाषण्डानाश्रितास्तेना भर्तृघ्न्यः कामगादिकाः । सुराप्य आत्मत्यागिन्यो नाशौचोदकभाजनाः' मनुश्च— 'पाषण्डमाश्रितानां च चरन्तीनां च कामतः । गर्भभर्तृद्रुहां चैव सुरापीनां च योषिताम्' पतितनिर्हारादौ विशेषमाह यमः– "नाशौचं नोदकं नाश्रु न कुर्यात् प्रेतकर्म च । ब्रह्मदण्डहतानां च न कुर्यात् कटधारणम्" ब्रह्मदण्डो ब्रह्मशापः । कटधारणं प्रेतधारणम् । 'वैतानं प्रक्षिपेदप्सु आवसथ्यं चतुष्पथे । पात्राणि च दहेदग्नौ यजमाने वृथा

**प्रेतकर्मानर्हाः**

हते ॥ अत्मनस्त्यागिनां नास्ति पतितानां तथा क्रिया । तेषामपि तथा गङ्गातोयेऽवस्थापनं हितम् ॥ कृत्वाग्निमुदकं स्नानं दर्शनं वाहनं कथाम् । रज्जुच्छेदाश्रुपातं च तप्तकृच्छ्रेण शुध्यति' स्नाननिषेधः प्रेतस्यैव । स्वस्य तु सद्यःशौचविधानात् स्नाने तु न दोषः । संवर्तश्च– 'एषामन्यतमं प्रेतं यो वहेत दहेत वा । कटोदकक्रियां कृत्वा कृच्छ्रं सान्तपनं चरेत्' एतद्बुद्धिपूर्वविषयम् । अन्यत्र तु, 'तच्छवं केवलं स्पृष्ट्वा अश्रु वा पतितं यदि । पूर्वोक्तानामकारी चेदेकरात्रमभोजनम्' इति ॥ तेनैव प्रायश्चित्तलाघवस्मरणात् ॥ तथा पराशरः– 'गोभिर्हतं जलोद्बन्धैर्ब्राह्मणेन च घातितम् । तं स्पृशन्ति च ये विप्रा वोढारश्चाग्निदाहकाः ॥ तप्तकृच्छ्रेण शुध्यन्ति पराशरवचो यथा' अत्र पतितादयश्च स्वसपिण्डमरणे नोदकं दद्युरित्याह याज्ञवल्क्यः– ''न ब्रह्मचारिणः कुर्युरुदकं पतिता न च'' वृद्धमनुश्च– 'क्लीबाद्या नोदकं दद्युः पतिताश्च विधर्मिणः । गर्भभर्तृद्रुहश्चैव सुराप्यश्चैव योषितः' अत्र विशेषमाह प्रजापतिः– 'स्नेहकार्यभयादिभ्यो यस्तत्कुर्यान्नराधमः । चण्डालेन हतस्यापि तस्य वक्ष्यामि निष्कृतिम् ॥ चरेत् सान्तपनं कृच्छ्रं मत्या चेत्तप्तकृच्छ्रकम् । तच्छवं केवलं स्पृष्ट्वा पातयित्वाश्रु वा तथा ॥ एकरात्रं तु नाश्नीयात्त्रिरात्रं बुद्धिपूर्वके । श्राद्धं कृत्वा चरेत्कृच्छ्रं मत्या सान्तपनं चरेत् ॥ तथा श्राद्धभुजां चैव द्विगुणं ब्रह्मचारिणाम्' किञ्च, 'व्याधितस्य कदर्यस्य ऋणग्रस्तस्य सर्वदा । क्रियाहीनस्य मूर्खस्य नास्तिकस्य विशेषतः ॥ व्यसनासक्तचित्तस्य पराधीनस्य सर्वदा । नित्यस्नानविहीनस्य भस्मान्तं सूतकं भवेत्' इति दक्षादिस्मृत्यन्तरवचनान्यत्र



**दुर्मृतौ वत्सरान्ते वा षण्मासान्ते त्र्यहात् क्रियाः ।**
**त्र्यहं चाघमिहावश्यं नारायणबलिर्भवेत् ॥ ७२ ॥**

द्रष्टव्यानि ॥ अस्माभिस्तु विस्तरभयादुपरम्यते ॥ ७१ ॥

**दुर्मृतौ संस्कारकालः**

पश्चात्तु मन्त्रतो दाह्या इत्युक्तं तत्र कालनियममाह– ॥ **दुर्मृताविति** ॥ दुर्मृतौ विषोद्बन्धनादिभिः पूर्वोक्तैर्मरणैर्वत्सरान्ते षण्मासान्ते वा त्र्यहाद्दशाहादिक्रियाः कार्याः । अत्राघमाशौचं च त्र्यहम् । इह दुर्मृतौ अवश्यं नियमेन नारायणबलिर्भवेत् । तथा ब्राह्मे— ''क्रियते पतितानां तु गते संवत्सरे क्वचित् । देशधर्मप्रमाणत्वाद्गयामूले च बन्धुभिः ॥ मार्ताण्डपादमूले वा श्राद्धं हरिसमर्पणम् । स्मरणाद्यत्र शुद्धिः स्यात् सुरापानादिकर्मसु ॥ स्वयंमृतस्य शुद्धिः स्यात्कुत्रचिद्देशगौरवात्'' हरिसमर्पणं श्राद्धं नारायणबलिः । (व्यासः– 'सर्वेषामेव लोकानां गुरुर्नारायणो हरिः । तस्य सम्पूजनं कार्यं सर्वपापहरं हि तत् ॥ तमुद्दिश्य बलिः कार्यो दत्तो हि दुरितापहः । मन्त्वसंस्काररहीनं तु सुगतिं प्रापयिष्यति' नारदश्च– 'नारायणबलिः कार्यो लोकगर्हाभयान्नरैः') तथा तेषां भवेच्छौचं नान्यथेत्यब्रवीन्मनुः ॥ तत्र त्रिरात्रमाशौचं द्वितीये त्वस्थिसञ्चयः । तृतीये तूदकं दत्वा चतुर्थे श्राद्धमाचरेत्' एवञ्च नारदस्मरणात् । 'ये मृताः पापमार्गेण तेषां संवत्सरात् परम् । नारायणबलिं कृत्वा कुर्यादूर्ध्वक्रियां द्विजः' इति वचनाच्च पूर्वं नारायणबलिं कृत्वा पश्चात् त्रिरात्रेण प्रेतकृत्यं कुर्यात् । हारीतश्च– 'भस्मास्थीनि गृहीत्वा तु विप्राणामनुशासनात् । क्षीरप्रक्षालनं

कृत्वा तदस्थि प्रेतवद्दहेत् ॥ पुनर्विधानमन्त्रेण यथाविधि समाचरेत् । एवमेव विधिं कुर्यान्मरणे गर्हिते सति' अखण्डादर्शे च– 'अब्दान्ते वाथ षण्मासे पुनः कृत्वा तु संस्कृतिम् । त्रिरात्रमशुचिर्भूत्वा पिण्डं कुर्यात् क्रियादिकम्' षण्मास इति समाहारद्वन्द्वः । अस्मिन्नतीत इति शेषः ॥ अङ्गिराश्च– ''नारायणबलिः कार्यो दुर्मृतौ दुर्मृतस्य तु । संवत्सरे व्यतीते वा तदर्धे पाद एव वा ॥ पितृमेधक्रियाः सर्वाः सपिण्डीकरणादृते । कृत्वा पश्चाद्यथासूत्रं बलिकर्म समाचरेत्'' यथासूत्रं सपिण्डीकरणमित्युक्तत्वाद्यथाकथञ्चित् स्वसूत्रविदभावे दाहादिकमन्यसूत्रेणापि कार्यमिति प्रतीयते ॥ तथा स्मृत्यन्तरे– 'सूत्रान्तरेण यद्दग्धं प्रेतं तस्योत्तराः क्रियाः । स्वसूत्रेणैव कर्तव्याः सपिण्डी तु विशेषतः' दाहानन्तरं स्वसूत्रविल्लाभे उदकदानाद्युत्तरक्रियाः स्वसूत्रेणैव कार्या इत्यर्थः ॥ (अत्र विशेषमाह भारद्वाजः– 'यस्मिन् सूत्रे विवाहः स्यात्तेन प्रेतस्य च क्रियाः । पिण्डसंसर्जनादर्वाक् सपिण्डी तु स्वसूत्रतः' अत्र नारायणबलिप्रकारो विज्ञानेश्वरादौ द्रष्टव्यः)॥ अत्र स्मृत्यन्तरेऽपि विशेषः– 'यावत् षण्मासमित्यन्ये यावन्मासत्रयं परे । नास्ति प्रेतक्रियेत्येके प्रायश्चित्तं विदुः परे' प्रायश्चित्तमाह– 'प्राजापत्यादिकृच्छ्रं च तप्तकृच्छ्रत्रयं तथा । चान्द्रायणं ततः कुर्यान्नारायणबलिं तथा ॥ कृत्वैतद्वत्सरस्यान्ते विदधीतौर्ध्वदैहिकम् । षण्मासाद्द्विगुणं कार्यं त्रिमासात् त्रिगुणं भवेत् ॥ चतुर्गुणं त्रिपक्षे स्यात् सद्यः पञ्चगुणं भवेत्' वृद्धपराशरः– 'तत्काले सति प्रायश्चित्तं चतुर्गुणम् । षण्मासान्ते त्रिगुणम् ।

**दुर्मृतौ प्रायश्चित्तम्**



वत्सरान्ते द्विगुणम् । त्रिहायनान्ते प्रोक्तमेवाचरती'ति ॥ अत्र विषयभेदेन कालव्यवस्थामाह सुमन्तुः– 'अग्निविद्युत्पयःपातचण्डालब्राह्मणैर्हताः । एकद्वित्रिचतुःपञ्चषडब्दैः शुद्धिमाप्नुयुः' संवर्तश्च– 'शस्त्रैर्विषाम्बुवाहैश्च कामतो ब्राह्मणो हतः । त्रिहायनमतीते तु प्रायश्चित्तं विदुर्बुधाः' एतत्कालविलम्बेन शुद्धिविधानं पूर्वोक्तप्रायश्चित्ताकरणविषयम् । तत्कृते तु सद्य एव । तथा कण्वः– ''मनुष्यवर्जं विप्राणां गर्हिते मरणे सति । सद्य एव क्रियाः कार्याः विप्राणामनुशासनात्' अपरार्के च– ''दुर्मृतौ सद्य एव स्यात् संस्कारो हि द्विजन्मनाम् । लब्ध्वा कृच्छ्राणि विप्रेभ्य इति धर्मविदां मतम्'' इति ॥ देशविशेषे मरणे वसिष्ठः– 'अकामतो हतानां तु द्विजातीनां वने पथि । ग्रामे वा नगरे वापि कुटिकेषु गृहेषु वा ॥ संवत्सरे व्यतीते तु ब्राह्मणैरभ्यनुज्ञया । कृच्छ्रातिकृच्छ्रं सौम्यं च चरेत् सान्तपनं तथा ॥ गोदानं तद्व्रतस्यान्ते ब्राह्मणानां च भोजनम् । मण्टपे गोपुरे वापि प्रासादे हर्म्यभित्तिषु ॥ अकामतो मृतानां तु दापयेदैन्दवद्वयम् । प्राजापत्यं चरेत् कृच्छ्रं पराकेण विशुध्यति ॥ पूर्णेऽब्दे तु व्रतं कुर्यात् समाप्ते तूदकक्रिया । नारायणबलिं कुर्याच्छुद्धिरेषां प्रकीर्तिता' किञ्च, 'अतिमानादतिक्रोधात् स्नेहाद्वा यदि वा भयात् । उद्बन्धान्म्रियते नारी नरो वापि कथञ्चन ॥ भृग्वग्निजलपातेन म्रियतेऽनशनेन वा । पूयशोणितसम्भूते त्वन्धे तमसि दारुणे ॥ षष्टिर्वर्षसहस्राणि हत्वात्मानं वसेन्नरः । आत्मत्यागः परत्यागात् पापीयान् पातकादपि ॥ पातके निष्कृतिर्दृष्टा कथमात्मघ्ननिष्कृतिः' इत्यादिवचनैरात्महनने दोषाधिक्यश्रवणात् ॥

**आद्योराश्रमिणोर्नाशे वर्णोक्तं त्वन्ययोर्मृतौ ।**
**सद्यः शौचं गृहिण्येवं सद्योऽन्येषु सदा मिथः ॥ ७३ ॥**

"शस्त्रं द्विजातिभिर्ग्राह्यं धर्मो यत्रोपरुध्यते । द्विजातीनां च वर्णानां विप्लवे कालकारिते" 'सर्वत एवात्मानं गोपाये'दिति मन्वादिभिरापत्काले शस्त्रग्रहणेनाप्यात्मरक्षणस्मरणाच्च । 'बन्दीगृहे भयार्ते वा राष्ट्रक्षोभे तथैव च । चण्डालैः सह सम्पर्कं यस्तु कृत्वापदि द्विजः ॥ विप्राणां पार्षदं दृष्ट्वा आत्मदोषं प्रकाशयेत्' इति पराशरादिभिरापत्कालकृतदोषस्य प्रायश्चित्तस्मरणाच्च ॥ बुद्धिपूर्वात्महननस्यात्यन्ताकृत्यत्वेन बन्दीगृहादिभयेनात्महननं दुर्मृतिर्नैवेत्यलम् ॥ ७२ ॥

गृहस्थादि विषये

॥ आद्योरिति ॥ आद्योर्ब्रह्मचारिगृहस्थयोः मृतौ स्वस्वजात्युक्तं भवति । अन्ययोर्वानप्रस्थसन्यासिनो मृतौ सद्यःशौचम् । गृहिणि गृहस्थविषये अन्येषु ब्रह्मचारिवानप्रस्थयतिषु । परस्परं सर्वदा सद्यःशौचम् । गृहस्थमृतौ ब्रह्मचारिवानप्रस्थयतिषु च सपिण्डेषु परस्परं सद्यःशौचं भवतीत्यर्थः ॥ अत्र बृहस्पतिः— 'नैष्ठिकानां वनस्थानां यतीनां ब्रह्मचारिणाम् । नाशौचं सूतके प्रोक्तं शावे चापि तथैव च ॥ प्रायश्चित्तप्रवृत्तानां दातृब्रह्मविदां तथा' गौतमश्च— "अनृत्विग्दीक्षितब्रह्मचारिणा"मिति ॥ पराशरश्च— 'बाले मृते यतौ प्रेते सद्यःशौचं विधीयते' याज्ञवल्क्यः— 'सत्रिव्रतिब्रह्मचारिदातृब्रह्मविदां तथा' सद्यश्शौचमिति प्रोक्तम् । सत्री सन्ततान्नसत्रप्रवृत्तः । व्रती कृच्छ्रादिषु प्रवृत्तः । तथा विज्ञानेश्वरे— 'नित्यमन्नप्रदस्यापि कृच्छ्रचान्द्रायणादिषु । निर्वृत्ते



**कृच्छ्रदेवोत्सवश्राद्धदानहोमतपोध्वरे ।**
**प्रारब्धे तत्प्रवृत्तानां सद्यः शौचमघागमे ॥ ७४ ॥**

कृच्छ्रहोमादौ ब्राह्मणादिषु भोजने ॥ गृहीतनियमस्यापि न स्यादन्यस्य कस्यचि'दिति ॥ अत्र यद्यपि दातुः सद्यश्शौचमित्युक्तम्, तथाप्यात्मविषया तदुक्तिरिति मन्तव्यम् ॥ ब्रह्मविद् यतिः ।(कलौ गुणाशौचस्य निषिद्धत्वादविगीतशिष्टाचाराच्च यतिव्यतिरिक्तस्य ब्रह्मविदोऽप्याशौचमस्त्येव )॥ अन्यत्र स एव च— 'देशान्तरमृतिं श्रुत्वा क्लीबे वैखानसे यतौ । मृते स्नानेन शुद्ध्यन्ति गर्भस्रावे च गोत्रिणः' वैखानसो वानप्रस्थः । स्मृत्यन्तरे च— 'सर्वसङ्गनिवृत्तस्य ध्यानयोगरतस्य च । न तस्य दहनं कुर्यान्नाशौचं नोदकक्रिया'मिति ॥ ७३ ॥]

प्रारब्धकृच्छ्रादावसूतकम्

अथ कृच्छ्रादिविषये— ॥ कृच्छ्रदेवेति ॥ कृच्छ्राः चान्द्रायणादयः । होमो गणयागायुतहोमादिकर्म । तपांसि नियमाः । शेषं सुगमम् ॥ कृच्छ्रादौ प्रारब्धे तत्र प्रवृत्तानां प्रवृत्त्युत्तरकालं स्वस्वसपिण्डजननमरणनिमित्ताशौचसम्भवे सद्यःशौचम् । स्नानं कृत्वा कृच्छ्राद्यनुष्ठेयमित्यर्थः ॥ अत्र स्नानं च शावविषयम् । न तु प्रसवविषयम् । तत्र पितृव्यतिरिक्तस्य स्नानविधानाभावात् ॥ ब्राह्मे— 'यज्ञार्थं बहुसम्भारसम्भवस्यापि नो भवेत् । अथ देवप्रतिष्ठायां गणयागादिकर्मणि ॥ श्राद्धादिपितृयज्ञे च कन्यादाने च नो भवेत् । नित्यं व्रतपरस्यापि कृच्छ्रचान्द्रायणादिषु ॥ प्रवृत्ते कृच्छ्रहोमादौ ब्राह्मणादिषु भोजने । गृहीतनियमस्यापि न स्यादन्यस्य कुत्रचित् ॥ तावद्गृहीतदीक्षस्य

**श्राद्धोत्सवादौ भुक्त्यन्तः पाकादौ चाघसम्भवे ।**
**परैर्देयं च भोक्तव्यं न दोष इति निश्चयः ॥ ७५ ॥**

त्रैविद्यस्य महामखे । स्नानं त्ववभृथं यावत्तावत्तस्य नविद्यते ॥ जनने मरणे चैव त्रिष्वाशौचं न विद्यते । यज्ञे विवाहकाले च देवयागे तथैव च । गृहीतमधुपर्कस्य यजमानस्य चर्त्विजाम् ॥ पश्चात् पतितमाशौचं न भवेदिति निश्चयः । कुर्वतां याज्ञियं कर्म याजकानां तथैव च ॥ पश्चात् पतितमाशौचं न भवेदितिनिश्चयः । निमन्त्रितेषु विप्रेषु प्रारब्धे श्राद्धकर्मणि ॥ निमन्त्रितस्य विप्रस्य स्वाध्यायनिरतस्य च । गेहे पितृषु तिष्ठत्सु नाशौचं विद्यते क्वचित्' यत्तु, स्मृत्यन्तरम्— "मासिकान्याब्दिकं पित्रोरशुद्धोऽप्यौरसः सुतः । कुर्यादेव तिथिप्राप्तमिति शातातपोऽब्रवीत्" इति तत् प्रारब्धविषयम्। 'कार्यं प्रत्याब्दिके श्राद्धे त्वन्तरा मृतसूतके । आशौचानन्तरं कार्यमिति वासिष्ठभाषितम्' 'देये पितॄणां श्राद्धे तु ह्यन्तरा मृतसूतके । आशौचानन्तरं कार्यं तन्मासीन्दुक्षयेऽपि वा' इति वसिष्ठगोभिलादिवचनैरघे प्राप्ते श्राद्धस्याघानन्तरमेव कर्तव्यत्वेन विधानात् ॥ पराशरः— 'दीक्षितेष्वभिशस्तेषु व्रततीर्थपरेषु च । तपोदानप्रसक्तेषु नाशौचं मृतसूतके' याज्ञवल्क्यः— 'ऋत्विजां दीक्षितानां च देशान्तरमृतौ तथा । व्रतिनां सत्रिणां चैव सद्यःशौचं विधीयते' विष्णुरपि— 'न दानप्रतिग्रहो (देवप्रतिष्ठो)त्सवविवाहेषु न देशविभ्रमे नाप्यापदि (नापद्यपि च) कष्टायामाशौचम्' ७४

**श्राद्धादि विषये** ॥ **श्राद्धोत्सवादाविति** ॥ श्राद्धं प्रसिद्धम् । उत्सवाश्चौलादयः । आदिशब्दाद्यज्ञसहस्रभोजनकृच्छ्रविहितब्राह्मणभोजनादेरुपसङ्ग्रहः । द्वितीयादिशब्दात् पाकादिभोजनपर्यन्तावान्तरव्यापारसङ्ग्रहः । तत्र शावसूतकसम्भवे परैराशौचरहितैर्नियमस्थैर्दातव्यम् । न त्वाशौचिजनैः । किञ्च, भोजनार्थं वृतैर्ब्राह्मणैर्भोक्तव्यं च ॥ तथा विज्ञानेश्वरे षट्त्रिंशन्मते । पराशरश्च— 'विवाहोत्सवयज्ञेषु अन्तरा मृतसूतके । परैरन्नं प्रदातव्यं भोक्तव्यं च द्विजोत्तमैः ॥ भुञ्जानेषु तु विप्रेषु अन्तरा मृतसूतके । अन्यगेहोदकाचान्ताः सर्वे ते शुचयः स्मृताः' 'अन्यगेहोदकाचान्ता' इति स्मरणाद्भोजनान्तमेवाशौचाभावः । तत्रैव क्रतुः— 'विवाहोत्सवयज्ञादिष्वन्तरा मृतसूतके । शेषमन्नं परैर्देयं दातॄन् भोक्तॄंश्च न स्पृशेत्' आशौचिजनैर्दातृभोक्तृभाण्डपदार्थादिस्पर्शो न कर्तव्यः । 'अस्पृष्टानां च भाण्डानां दशाहे शुद्धिरिष्यते । द्रव्याणां चापि संस्पर्शे विनामं सर्व(मांसं स)मुत्सृजेत् ॥ भुक्त्वाऽस्पृश्यैस्तथाशौचिकेशकीटैश्च दूषितम् । कुशौदुम्बरबिल्वाद्यैः पनसाम्बुजपत्रकैः ॥ शङ्खपुष्पीसुवर्चादिक्वाथं पीत्वा विशुद्ध्यती'ति विष्णुस्मरणात् ॥ अघश्रवणानन्तरं सहसा विरम्य परैरेव सर्वं कारयेदित्यर्थः ॥ अत्राशौचिदर्शनं वर्ज्यमित्युक्तं श्रीविष्णुपुराणे— 'उदक्यासूतिकाशौचिमृताहारैश्च वीक्षिते श्राद्धे सुरा न पितरो भुञ्जते पुरुषर्षभ!' अत्र विशेषः स्मृत्यर्थसारे दर्शितः— 'आरम्भो वरणं यज्ञे सङ्कल्पो व्रतसत्रयोः । नान्दीमुखं विवाहादौ श्राद्धे पाकपरिक्रिया ॥ निमन्त्रितेषु विप्रेषु प्रारब्धे श्राद्धकर्मणि' इत्यादिपूर्वोक्तवचनान्यत्रानुसन्धेयानि ॥ अत्र श्राद्धं भवता भोक्तव्य'मिति निमन्त्रिते "ॐ" इति प्रतिश्रुते निमन्त्रितस्य च निमन्त्रणात्परं कर्तुश्च परमारम्भात्परमागतमाशौचं नास्तीत्यर्थः ॥ ७५ ॥

**यज्ञोत्सवादौ सर्वत्र प्राक्क्लृप्तार्थेषु नास्त्यघम् ।**
**दानादौ ग्रहणे सद्यः पुत्रजन्मनि चापदि(व्रति) ॥ ७६ ॥**
**निष्कृतौ तीर्थयात्रायां वेदपारायणे व्रते ।**
**नामकर्मादिसंस्कारे प्रारब्धे सद्य इष्यते ॥ ७७ ॥**

॥ **यज्ञोत्सवादाविति** ॥ इदं देवार्थमिदं पित्रर्थमिदं ब्राह्मणार्थमित्यघागमात्पूर्वमेवोद्दिष्टपदार्थेष्वघं नास्ति । पूर्वसङ्कल्पितद्रव्यस्य प्रदाने प्रतिग्रहे च न दोष इत्यर्थः ॥ तथा क्रतुः– 'पूर्वसङ्कल्पितं द्रव्यं दीयमानं न दुष्यति' बृहस्पतिः– 'विवाहोत्सवयज्ञादिष्वन्तरा मृतसूतके । पूर्वसङ्कल्पितार्थेषु न दोषः परिकीर्तितः' स्मृत्यन्तरे च– ("यज्ञोत्सवे व्रते श्राद्धे सूतके समुपागते । पूर्वसङ्कल्पितार्थेषु न दोषः परिकीर्तितः") दक्षोऽपि– 'यज्ञेषु प्रसवो यत्र जायेताथ म्रियेत वा । पूर्वसङ्कल्पितार्थेषु नाशौचं तत्र विद्यते' एतेन श्राद्धादौ पाकादेः प्रागघसम्भवे पक्वान्नं विना पूर्वसङ्कल्पितार्थप्रदाने न दोष इति सिद्धम् ॥ विष्णुरपि— 'न देवप्रतिष्ठाविवाहयोः पूर्वसङ्कल्पयोरपी'ति ॥ ७६ ॥)

*द्रव्याणामसूतकम्*

॥ **दानादाविति** ॥ आदिशब्देन जपहोमादयो गृह्यन्ते ।(स्वस्याशौचे सत्यपि चन्द्रसूर्योपरागे यावन्मोचनं तावद्दानादौ स्नाने नैवायोग्यो भवति)॥ तथा पुत्रजन्मनि चापदीति जातकृत्ये । एवमुत्तरत्रापि स्नानेन शुद्धो भवतीति योज्यम् ॥ निष्कृतिः प्रायश्चित्तम् । तीर्थादयः प्रसिद्धाः । नामकर्मादीत्यादिशब्देन श्मशानान्ताः संस्कारा गृह्यन्ते ।

*ग्रहणादिविषये*



अत्र वैय्याघ्रपादः– 'स्मार्तकर्मपरित्यागो राहोरन्यत्र सूतके' स्मार्तकर्म श्राद्धदानजपहोमादि । प्रजापतिः– "आशौचे तु समुत्पन्ने पुत्रजन्म यदा भवेत् । कर्तुस्तात्कालिकी शुद्धिः पूर्वाशौचेन शुद्ध्यति" स्मृतिरत्नावल्याम्– 'ग्रहणे चैव गङ्गायां जनने सूतकं न हि । मुक्तेनापि च कर्तव्याः स्नानदानादिकाः क्रियाः' वृद्धवसिष्ठः– 'मृते च सूतके चैव न दोषो राहुदर्शने । तावदेव भवेच्छुद्धिर्यावन्मुक्तिर्न दृश्यते' अङ्गिराश्च– सर्वे वर्णाः सूतके च मृतके राहुदर्शने । स्नात्वा श्राद्धं प्रकुर्वीत दानं शाठ्यादिवर्जिताः' ब्रह्माण्डे च– "आशौचं जायते नृणां ग्रहणे चन्द्रसूर्ययोः । राहुस्पर्शे तयोः स्नात्वा दानादौ कल्पते नरः" दक्षः– "व्रतिनां सत्रिणां चैव सद्यःशौचं विधीयते" याज्ञवल्क्यः– "सत्रिव्रतिब्रह्मचारी"ति ॥ पराशरः– 'व्रततीर्थपरेषु चे'ति । पैठीनसिः— 'विवाहोत्सवयज्ञेषु यात्रायां तीर्थकर्मणि । न तत्र सूतकं तद्वत् कर्मयज्ञादि कारयेत्' अत्र यथावान्तरसञ्ज्ञाभेदैर्यागमध्ये वाशौचागमेऽप्यवभृथान्तमनुष्ठीयते । तथा विवाहे यद्दताद्यवान्तरसञ्ज्ञाभेदेऽपि शेषहोमान्तस्य कर्मणो विवाहशब्दवाच्यत्वेन कर्मैक्यान्मध्येऽघसम्भवेऽपि शेषहोमान्तं कर्मानुष्ठेयमेव । नाशौचागमप्रतीक्षणम् ।(यथा वा कर्ममध्येऽघसम्भवेऽपि साङ्गमेवानुष्ठीयते । न प्रधानमात्रम् । तथात्रापि, यद्दतादीनामङ्गत्वेऽप्यशेषहोममन्तराघागमेऽप्यदोषादनुष्ठेयमिति सिद्धम्)॥(तथा दक्षः– 'यज्ञकाले विवाहेषु देवयागे च निष्कृतौ । हूयमाने तथैवाग्नौ नाशौचं न च सूतकम्' विवाहेष्विति बहुवचनं प्रधानहोमादिशेषहोमान्तकर्माभिप्रायम्॥ ब्राह्मे च– 'विवाहयिष्णोः कन्याया

लाजहोमादिकर्मणि । प्रायश्चित्तपरस्यापि स्वाध्यायनिरतस्य च' सद्यः
शौचमिति प्रकृतम् । लाजहोमादीत्यादिशब्देत यद्दतादिहोमं प्रविश्य
होमस्थालीपाकशेषहोमान्तकर्मोच्यते ॥ स्वाध्यायो वेदपारायणम् ।
गौतमः— 'ब्राह्मणस्य स्वाध्यायानिवृत्त्यर्थम्' अत्रापि स एव स्वा-
ध्यायशब्दार्थः । बोधायनः— 'अथातोऽनश्नन् पारायणविधिं व्याख्या-
स्यामः' इत्युपक्रम्य 'प्रणवव्याहृतिपूर्वकं वेदादिमारभ्य सततमधीयीत
नान्तरा विरमेद्व्याहरेद्वा नास्यान्तरा जननमरणाशौच'मिति ॥ यत्तु
कैश्चिद्व्याख्यातम्, बहुवेदस्य ब्रह्मोज्झनताकृतायामार्ताविदं सद्यःशौ-
चम् । एकवेदस्य 'स्वाध्यायश्च निवर्तत' इति वचनान्निषेध इति तद-
युक्तम् । 'यदा शुचिर्यद्देशः' 'विप्रो दशाहमासीत दानाध्ययनवर्जितः'
'स्वाध्यायश्च निवर्तते' 'जननाद्दशरात्रं च शावे च समुपस्थिते । नाधी-
यीत द्विजो नित्यं तावदाकालिकेषु च ॥ महागुरौ द्वादशाहं वेदस्या-
ध्ययनं त्यजेत्' 'स्वाध्यायदानप्रतिग्रहणानि वर्जयन्ती'त्यादिषु शौन-
कपराशरमनुवृद्धमनुकात्यायनादिवचनेषु सामान्येन स्वाध्यायनिषेधप-
रेषु तथा विषयभेदाप्रतीतेः ॥ विशेषवचनान्तरादर्शनेऽपि विषयभेदक-
ल्पनस्यातिप्रसङ्गान्मन्वाद्यनेकवचनसङ्कोचापत्तेश्च ॥ तस्मात् पारायणै-
कविषयं गौतमीयमिति स्थितम् । 'एतेन बहुशिष्यस्येद'मिति व्या-
ख्यातं च प्रत्याख्यातम् ॥ स्मृत्यन्तरे च— ''आशौचं कर्ममध्ये तु
शावं सूतकमेव वा । आपतेद्यदि सर्वेषां सद्यःशौचं विधीयते ॥ माता-
पित्रोश्च मरणे पुत्रस्य मरणे तथा'' कूर्मपुराणे च— 'काम्योपवासे
प्रक्रान्ते त्वन्तरा मृतसूतके । तत्र काम्यव्रतं कुर्याद्दानार्चनविवर्जितम्'



**व्रतमध्ये सूतके**

वाराहे च— 'सूतके च नरः स्नात्वा प्रणम्य शिरसा
हरिम् । एकादश्यां न भुञ्जीत व्रतमेतन्न लुप्यते ॥
मृतकेऽपि न भुञ्जीत एकादश्यां सदा नरः' विष्णुर-
हस्ये च— 'सूतके मृतके चापि न त्याज्यं द्वादशीव्रतम् । एकादशी-
व्रतं कुर्यान्नित्यं काम्यं तु वर्जयेत्' काम्यस्य वर्ज्यत्वोक्तिः प्रारम्भवि-
षया । प्रारब्धस्य 'काम्योपवासे प्रक्रान्त' इति कार्यत्वस्मरणात् ॥
पुराणेऽपि— ''एकादश्यां न भुञ्जीत नारी दृष्टे रजस्यपि'' विज्ञानेश्वरे
च— 'यज्ञे सम्भृतभारे च विवाहे श्राद्धकर्मणि । तथा
चौलादिसंस्कारे सद्यःशौचं विधीयते' अखण्डादर्शे

**विवाहे रजस्वला चेत्**

च— 'विवाहे वितते यज्ञे होमकाल उपस्थिते । क-
न्यामृतुमतीं दृष्ट्वा कथं कुर्वन्ति याज्ञिकाः ॥ यज्ञः प-
वित्रमन्त्रेण सावित्रीप्लुतवारिणा । अनेन चानुवाकेन पवमानः सुवर्चनः ॥
स्नापयित्वा तु विद्वद्भिरन्यवस्त्रामलङ्कृताम् । पूर्णाहुत्या च मि-
न्दाभ्यां हुत्वानुज्ञाप्य तांस्ततः ॥ तया सह ततस्तत्र होमशेषं समा-
पयेत' वृद्धगार्ग्यः— 'ज्येष्ठस्य तु क्रतोर्मध्ये मातापित्रोर्मृतिर्यदि ।
संस्कृत्य शालामागत्य यज्ञशेषं समापयेत् ॥ दीक्षारूपं निधायात्र
संस्कुर्यात् पितरौ हि सः' स्मृत्यन्तरे च— 'दीक्षितोऽप्येकपुत्रश्चेन्मा-
तापित्रोर्मृतिर्यदि । संस्कृत्य शालामागत्य यज्ञशेषं समापयेत् ॥ अ-
न्तर्दशाहे जनने पश्चात् स्यान्मरणं यदि । प्रेतमुद्दिश्य कर्तव्यं पिण्ड-
दानं स्वबन्धुभिः ॥ प्रारब्धे प्रेतपिण्डे तु मध्ये चेज्जननं भवेत् ।
तोयाशौचं च पिण्डांस्तु शेषान् दद्याद्यथाविधि' शङ्खः— 'आद्यं श्रा-

**दासीदासनृपामात्याः कारवः शिल्पिनस्तथा ।**
**स्वस्वकृत्ये सदा शुद्धाः शुद्धा नैवान्यकर्मसु ७८ ॥**

द्धमशुद्धोऽपि कुर्यादेकादशेऽहनि । कर्तुस्तात्कालिकी शुद्धिरशुद्धः पुनरेव सः' एवमेव लोगाक्षिवचनमपि तत्र 'नवश्राद्धमशुद्धोऽपी'ति भेदः ॥ ७७ ॥

**दासादि-विषये**

॥ **दासीदासनृपेति** ॥ दासनृपौ पूर्वोक्तलक्षणौ । अमात्या राजभृत्याः । शिल्पिनः काष्ठादिसंस्कर्तारः । तथा ब्राह्मे– 'हिरण्यरूप्यवस्त्राणां काष्ठपाषाणचर्मणाम् । संस्कर्ता तत्क्रियाभिज्ञः शिल्पी चोक्तो मनीषिभिः' एते दासादयः स्वस्वकर्मणि सदा आशौचेऽपि शुद्धाः । अन्यकर्मसु नैव शुद्धाः । असाधारणेष्वेव सद्यःशौचं नान्यत्रेति योज्यम् । अत्र पराशरः– 'कारवः शिल्पिनो वैद्या दासीदासास्तथैव च । राजानो राजभृत्याश्च सद्यःशौचाः प्रकीर्तिताः' कारवो रजकादयः । शातातपश्च– ''मूलकर्मकराः शूद्रा दासीदासास्तथैव च । स्नाने शरीरसंस्कारे गृहकर्मणि दूषिताः'' विज्ञानेश्वरे च– 'कारुहस्तः शुचिः । कारवो रजकसूपकाराद्याः । तेषां हस्तः शुचिः शुचित्वं च तत्साध्ये कर्मणि वस्त्रधावनादौ सूतकादिसद्भावेऽपी'ति ॥ पुराणे च– ''सूपकारेण यत् कर्म करणीयं नरेष्विह । तदन्यो वै न जानाति तस्माच्छुद्धः स सूपकृत्'' सुष्ठु सुतरां वा उपकरोतीति सूपकृत् शिल्पी । 'चिकित्सको यत् कुरुते तदन्येन न शक्यते। तस्माच्चिकित्सकः स्पर्शे शुद्धो भवति नित्यशः ॥ दास्यो दासाश्च यत् किञ्चित् कर्म कुर्वन्ति लीलया ।



**न विशेद्देवतागारं न कुर्याद्वन्दनाद्यपी ।**
**दशाहं सोदकज्ञात्योस्त्रिरात्रं योनिबन्धुषु ॥ ७९ ॥**

तदन्ये न क्षमाः कर्तुं तस्मात्ते शुचयः सदा ॥ सद्यः स्पृश्यो गर्भदासो भक्तदासस्त्र्यहाच्छुचिः । राजा करोति यत् कर्म स्वप्नेऽप्यन्यस्तु तत् कथम् ॥ एवं सति नृपः शुद्धः स्पर्शे तु मृतसूतके । यत् कर्म राजभृत्यानां हस्त्यश्वगमनादिकम् ॥ तन्नास्ति यस्मादन्यस्य तस्मात्ते शुचयः स्मृताः । शिल्पिनश्चित्रकाराद्याः कर्म यत् साधयन्त्यलम् ॥ तत् कर्म नान्यो जानाति तस्माच्छुद्धाः स्वकर्मणि' मनुश्च– 'न राज्ञामघदोषोऽस्ति व्रतिनां न च सत्रिणाम् । *डिम्भाहवहतानां च विद्युता पार्थिवेन च ॥ राज्ञो माहात्मिके स्थाने सद्यःशौचं विधीयते' याज्ञवल्क्यः– 'महीपतीनां नाशौचं हतानां विद्युता तथा' अत्र बहुवचनं तत्तद्भूभागाधिपतिराजबहुत्वाभिप्रायम् । तेषां प्रजापालनादिष्वनाशौचमित्यर्थः ॥ विष्णुः– 'न राज्ञां राजकर्मणि न व्रतिनां व्रते न सत्रिणां सत्रे न कारूणां कारुकर्मणि' इति । अन्यत्र विद्यते । (ब्राह्मे च— 'राज्यनाशश्च येन स्याद्विना राज्ञा स्वमण्डले । प्रवास्यतश्च सङ्ग्रामं होमे प्रस्थानिके सति ॥ मन्त्रादितर्पणे चैव प्रजानां शान्तिकर्मणि । आशौचं न भवेल्लोके सर्वत्रान्यत्र विद्यते' इति ॥) ७८ ॥

**आशौचे वर्ज्यकर्म**

आशौचिनो वर्ज्यमाह— ॥ **न विशेद्देवतेति** ॥ आदिशब्देन पुष्पाहरणपूजोपकरणस्पर्शनादि गृह्यते । यद्यपीदं पूर्वमेव वक्तव्यम् । तथापि, दासदास्योः

* डिम्भाहवो नृपरहितयुद्धम् ।

स्वकर्मसु शुचित्वस्मरणात् । देवदास्यादेश्च देवगृहे कर्मकरणे प्रसक्तौ तदपवादकीर्तनमत्रैवोक्तमिति न चोद्यावकाशः ॥ तथा वाराहे द्वात्रिंशदपचारगणने श्रीभगवानाह— 'उच्छिष्टे चैव चाशौचे भगवद्वन्दनादिकम्' तत्रैवान्यत्र— 'मन्दिरं न प्रवेष्टव्यं प्रविष्टस्य फलं शृणु । चाण्डालीं योनिमाविश्य जन्मानि नव पञ्च च ॥ भविष्यति वरारोहे! व्याधिक्रूरोऽतिनिष्ठुरः' आशौचिस्पर्शे बिम्बस्य सम्प्रोक्षणमप्याह शौनकः— 'चण्डालसूतिकोदक्याशवसूतकदूषिते । निमित्ते समनुप्राप्ते सद्यः कृत्वा समर्चयेत्' अन्यविषयेऽपि वन्दनस्य वर्ज्यत्वमाहापस्तम्बः— 'अप्रयतेन नाभिवाद्यम् । तथा प्रयतायाप्रयतश्च न प्रत्यभिवादयेत्' शङ्खोऽपि— 'नोदककुम्भहस्तोऽभिवादयेत् । न पुष्पहस्तो नाशुचिः' बोधायनः— 'नासीनो नासीनाय न शयानो न शयानाय नाप्रयतो नाप्रयताय' अत्राप्रयतमशुद्धत्वं तच्च शावसूतकाभ्यां च भवति । तथा मनुः— 'दन्तजातेऽनुजाते च कृतचौले च संस्थिते । अशुद्धा बान्धवाः सर्वे सूतके च तथोच्यते' अत्र वन्दनस्य वर्ज्यत्वस्मरणं कायिकाभिप्रायम् । मानसस्य न दोषः । 'न ह्यस्ति मनस उपघातः । अन्तरेण मलवद्वासिनीं सूतिकां शवस्पृष्टिकं चे'ति श्रुतेः ॥ 'मनो हि शुद्धमन्यत्र सूतोदक्याशवस्पृशः । अशुचिर्वा शयानो वा तिष्ठन् गच्छन् स्वपन्नपि ॥ मन्त्रैकमरणो विद्वान् मनसैव समाचरेत्' इति भरद्वाजस्मृतौ च ॥ श्रीः ॥

॥ **दशाहं सोदकज्ञात्योरिति** ॥

**प्रेतनिर्हरणे** निर्हारशब्देनेदमुच्यते । 'प्रेतस्य वासःस्रग्गन्धभूषणाद्यैरलंक्रिया । वहनं दहनं चेति निर्हारार्थो निरुच्यते' तस्मिन्



प्रेतनिर्हरणे कृते समानोदकसपिण्डयोर्दशरात्रम्, प्रेतनिर्हरणाभावेऽपि सपिण्डानां दशरात्रं सिद्धत्वात् । योनिबान्धवा मातुलादयः । तैः प्रेतनिर्हरणे कृते तेषु त्र्यहम् । विजातिभिर्भिन्नवर्णैः प्रेतनिर्हरणे कृते शवजात्युक्तमाशौचम् । भरद्वाजः— 'यः समानोदकं प्रेतं वहेद्वाथ दहेत्तु वा । तस्याशौचं दशाहं स्यादन्येषां त्रियहं विदुः' अन्येषां योनिबन्धूनाम् । स्मृत्यन्तरे च— 'शावाशौचं दहेत् प्रेतं पक्षिण्याशौचवान् यदि । द्वियहं त्रियहं वा स्यादमत्या शुद्धिसाधनम् ॥ पक्षिण्याशौचसम्मिश्रे दहने मतिपूर्वके । आशौचिनां त्रिरात्रं स्यात् त्रिरात्रं पक्षिणीं प्रति' शङ्खः— 'त्रियहं योनिबन्धूनामाशौचं वहनादिषु' माण्डव्यः— "शावे च सूतके चैव त्र्यहं तूदकदायिनः । शववाहं तु कुर्याच्चेद्दशाहान्ताद्भवेत् क्रिया" 'आशौचं पिण्डोदकदानं चे'ति क्रियाशब्दो विज्ञानेश्वरेणोक्तः ॥ अखण्डादर्शे च— 'समानोदाः प्रकुर्वीरन् संस्कारं वहनं यदि । दशाहान्तेन शुद्धिः स्यादित्याह भगवान् भृगुः' गौतमोऽपि— 'अवरश्चेद्वर्णः पूर्ववर्णमुपस्पृशेत् । पूर्वो वा अवरम् । तत्र शावोक्तमाशौच'मिति ॥ व्याघ्रोऽपि— 'अवरश्चेद्वरं वर्णं पूर्वो वाप्यवरं यदि । वहेच्छववदाशौचं दृष्टार्थे द्विगुणं भवेत्' शववच्छवजात्युक्तमाशौचमित्यर्थः ॥ मनुश्च— 'अह्नैव खलु चैकेन त्रिरात्रैरेव च त्रिभिः । शवस्पृशो विशुद्ध्यन्ति त्र्यहात्तूदकदायिनः' अनुपेतनिर्हारे त्रिभिस्त्रिरात्रैरह्नैकेन चाहत्य दशरात्रेणैव शवस्पृशः शवनिर्हर्तारः सपिण्डाः शुद्ध्यन्ति । समानोदकास्तु त्र्यहाच्छुद्ध्यन्तीत्यर्थः ॥ विप्रकृष्टसमानोदकस्यापि निर्हारनिबन्धनेन दशाहविधानादिति भावः । अत्र विजा-

**विजातिषु शवोक्तं स्यात् प्रेतनिर्हरणे कृते ।**
**यः प्रमीतमलं कुर्याद्वहेद्वाथ दहेद्द्विजः ॥ ८० ॥**

तिप्रेतनिर्हारे शवजात्युक्तमाशौचं भृतिग्रहणाभावे वेदितव्यम् । तद्ग्रहणे तु द्विगुणाशौचस्य वक्ष्यमाणत्वात् । तस्मात् स्नेहादिना विजातीयप्रेतनिर्हारविषयमिदं जात्युक्ताशौचमिति सिद्धम् ॥ तथा वृद्धपराशरः– 'योऽसवर्णममूल्येन नीत्वा प्रेतं दहेन्नरः । आशौचं तु भवेत्तस्य प्रेतजातिसमं सदे'ति ॥ श्रीः ॥ ॥ यः प्रमीतमलमिति ॥ यस्त्वसपिण्डं मृतमलङ्कुर्याद्वहेद्वा दहेद्वा स तत्कालशेषं दिवा निर्हरणे आ नक्षत्रोदयम्, रात्रावार्कोदयम्, ग्रामाद्बहिर्वसन् एककालेन तत्कालशेषेण दिवामात्रेण त्रिरात्रिमात्रेण वा शुद्ध्यति । ग्राम एव वसन् दिनेन, प्रेतगृहे वसन् त्रिरात्रेण । यः प्रेतमलङ्कृत्य वहित्वा दग्ध्वा वा प्रेतान्नं भुङ्क्ते स तु ग्रामे वा प्रेतगृहे वान्यत्र वा वसन् दशाहतः शुद्ध्यति । "त्रिरात्रं योनिबन्धुषु" "त्र्यहात् प्रेतगृहे वसन्" इत्युक्तेः । त्र्यहाशौचिनौ दशरात्रेण शुद्ध्यतः न तु त्र्यहमात्रात्तयोस्तत्र भोजने चान्द्रायणं चेति तुशब्दार्थः ॥ मनुः– 'असपिण्डं द्विजं प्रेतं विप्रो निर्हृत्य बन्धुवत् । विशुद्ध्यति त्रिरात्रेण मातुराप्तांश्च बान्धवान् ॥ यद्यन्नमत्ति तेषां तु दशाहेनैव शुद्ध्यति । अनदन्नन्नमह्नैव न चेत्तस्मिन् गृहे वसेत्' अत्र "न चेत्तस्मिन् गृहे वसे"दिति प्रेतगृहे वासाभावे दिनविधानात् । "विशुद्ध्यति त्रिरात्रेणे"त्यत्र प्रेतगृहवासे सतीति व्याख्येयम् ॥ एवं निर्हारावलम्बनेनैव त्र्यहदिनयोर्विधानात्तदभावे तद्गृहवासिनोऽप्यन्यस्य

**सजातीयशवदहने**



**स शुध्यत्येककालेन कालशेषं बहिर्वसन् ।**
**ग्रामे वसन् दिनाच्छुध्येत् त्र्यहात् प्रेतगृहे वसन् ॥ ८१ ॥**

न किञ्चिदप्याशौचम् । अन्यगृहवासिनो निर्हर्तुर्दिनविधिरश्रोत्रियविषयः । श्रोत्रियमृतौ तु निर्हारे न । तदभावेऽपि सर्वस्यापि ग्रामवासिनो जनस्य दिनविधानात् । भरद्वाजश्च– "अगोत्रिणां तु बन्धूनां सज्योतिरशुचिर्भवेत्" अशुचिराशौचम् । हारीतश्च– "प्रेतनिर्हरणं कृत्वा ग्रामं न प्रविशेन्नरः" आ नक्षत्रदर्शनात् । अन्यत्र स एव— 'शवस्पृशो ग्रामं न प्रविशेयुरा नक्षत्रदर्शनाद्रात्रौ चेदादित्यस्य दर्शनात्ततः शुद्धाः' अखण्डादर्शे च— 'दाहं विनालङ्करणं वाहं कृत्वा दिनस्य तु । शेषेण शुद्धिरुक्तैव रात्रावप्युषसि प्लवः' प्लवः स्नानम् । विज्ञानेश्वरीये च– 'कृच्छ्रपादोऽसपिण्डस्य प्रेतालङ्करणे कृते । अज्ञानादुपवासः स्यादशक्तौ स्नानमिष्यते' अत्र स्मृत्यन्तरे विशेषः—

"सज्योतिस्तु बहिर्वासो रात्रौ नक्षत्रदर्शनात् । प्राशयेत् पञ्चगव्यं च ब्राह्मणैः स्वस्ति वाचयेत्" देवलः– "विहितं तु सपिण्डानां प्रेतनिर्हरणादिकम् । तेषां करोति यः कश्चित् तस्याधिक्यं न विद्यते" आधिक्यं बहिर्वासपञ्चगव्यप्राशनकृच्छ्रोपवासादिकम् । भरद्वाजश्च– 'असपिण्डशवस्य स्नानालङ्करणे कृते दिवसं वहने कृते दशप्राणायामान् कृत्वा नक्षत्रदर्शनात् पूर्वं ग्रामाद्बहिरासीत । तावदेवाशौचम् । रात्रौ सूर्योदयात् पूर्वं ग्रामाद्बहिरासीत ।(अन्यथा तद्ग्रामे प्रविष्टे शवहर्तुरेकाहम् । तद्गृहं प्रविष्टे त्र्यहम् । तत्र भोजने कृते दशाहं भवती'ति )॥ श्रीः ॥

**वहनदहनप्रायश्चित्तम्**

**निर्हृत्य यो मृतान्नं च भुङ्क्ते स तु दशाहतः ।**
**यतीन्द्रानाथनिर्हारे सद्यः शुद्धिर्महाफलम् ॥ ८२ ॥**

**अनाथसंस्कारफलम्**

अनाथादिविषये– ॥ **यतीन्द्रानाथेति** ॥ अनाथः पुत्रदारादिरहितः । तथा पराशरः— ''मित्रबन्धुसुहृत्पुत्रधनदारगृहोज्झितम् । अनाथं ब्राह्मणं प्रेतं ये वहन्ति द्विजातयः ॥ पदे पदे यज्ञफलमानुपूर्व्याल्लभन्ति ते । न तेषामशुभं किञ्चित् पापं वा शुभकर्मणाम् ॥ जलावगाहनात्तेषां सद्यः शौचं विधीयते'' ब्राह्मे– 'अनाथं ब्राह्मणं दग्ध्वा क्षत्रियं वैश्यमेव वा । पितृमेधमहायज्ञफलं प्राप्नोति मानवः' स्मृत्यन्तरे च– 'सन्यासिनां तु संस्कर्तुर्नाशौचं नोदकक्रिया । अश्वमेधफलं तस्य भवेन्नास्त्यत्र संशयः' वृद्धपराशरः– 'प्रेतस्पर्शनसंस्कारैर्ब्राह्मणो नैव दुष्यति । वोढा चैवाग्निदाता च सद्यः स्नात्वा विशुध्यति' अत्र ब्रह्मविद्विषये स्मृत्यन्तरे विशेषः– 'यत्तु ब्रह्मविदा त्यक्तमपि तन्मङ्गलायनम् । दृष्ट्वा स्पृष्ट्वा विमुच्येत ब्रह्महा ब्रह्महत्यया' बोधायनश्च– 'सर्वसङ्गनिवृत्तस्य ध्यानयोगरतस्य च । न तस्य दहनं कुर्यान्नाशौचं नोदकक्रियाम् ॥ ये वहन्ति महात्मानं स्पृष्ट्वा दृष्ट्वा द्विजातयः । हयमेधफलं तेषामस्तीत्येवं विदुर्बुधाः' याज्ञवल्क्यश्च– '†प्रवेशनादिकं कर्म प्रेतसंस्पर्शिनामपि । *इच्छतां तत्क्षणाच्छुद्धिः §परेषां स्नानसंयमात्' अत्र विशेषः स्मृत्यन्तरे– 'उह्यमानं शवं दृष्ट्वा सवासा जलमाविशेत् ।

---

† निम्बपत्रदंशनादिवेश्मप्रवेशान्तं कर्म । * धर्मार्थं प्रेतनिर्हरणं कुर्वताम् । § परेषां तु तत्क्षणात् स्नानप्राणायामाभ्यामेव शुद्धिः ।



**दृष्टार्थं प्रेतनिर्हारे ज्ञातिभ्यो द्विगुणं त्वघम् ।**
**विजातीनां सजातेस्तु जात्युक्तमिति गौतमः ॥ ८३ ॥**

अलङ्कृतं शवं दृष्ट्वा सचेलं स्नानमाचरेत् ॥ आचम्य केवलं प्रेतं दृष्ट्वा काष्ठवदाचरेत्' काष्ठवदाचरणं यदृच्छया मार्गहीनशवदर्शन इति व्याख्येयम् । अन्यथातिप्रसङ्गात् ॥ ७९ ॥ ८० ॥ ८१ ॥ ८२ ॥

**धनार्थं प्रेतदहने**

॥ **दृष्टार्थं प्रेतेति** ॥ धनार्थं प्रेतनिर्हारे कृते प्रेतसपिण्डेभ्योऽपि द्विगुणमाशौचं विजातीनां भवति । सजातेस्तु सजातीयशवजात्युक्तम् । तुशब्दो द्विगुणशङ्कानिवर्तकः । एवं प्रकारेणाशौचं गौतम आहेति शेषः । तथा गौतमः— 'प्रेतोपस्पर्शने दशरात्रमाशौचमभिसन्धाय चेदुक्तं वैश्यशूद्रयोः' उपस्पर्शनं निर्हरणम् । अभिसन्धाय चेद्दृष्टमङ्गीकृत्य चेत् प्रेतं निर्हरति तस्य दशरात्रम् । विप्रस्य विप्रप्रेतनिर्हारविषयमिदम् । दशरात्राभिधानसामर्थ्यात् । एवं क्षत्रियस्यापि क्षत्रियोपस्पर्शने स्वजात्युक्तम् । वैश्यशूद्रयोरुक्तं ''विंशतिरात्रं वैश्यस्य मासं शूद्रस्ये''ति ॥ स्वस्वजात्युक्तमाशौचमित्यर्थः ॥ एवं व्याख्यातं तद्व्याख्याने ।

**अन्यवर्णदहने**

न त्वसवर्णनिर्हारे । व्यासः– 'यदि निर्हरति प्रेतं प्रलोभाक्रान्तमानसः । दशाहेन द्विजः शुध्येद्द्वादशाहेन भूमिपः ॥ अर्धमासेन वैश्यस्तु शूद्रो मासेन शुध्यती'ति ॥ व्याघ्रः– 'दृष्टार्थे द्विगुणम् ८३

॥ **शवानुगमने रोद इति** ॥ रोद आतुरव्यञ्जनम् । प्रेतविषयस्नेहादिना आतुरत्वं व्यज्यत इत्यातुरव्यञ्जनम् । कर्मण्यः कर्मार्हः ।

**शवानुगमने रोदे कर्मण्यो न हि तद्दिने ।**
**प्रेतकृत्ये तु तत्कालमशुद्धोऽथाप्लुतः शुचिः ॥ ८४ ॥**

**शवानुगमने**

अनुगमने कृते बान्धवैः सह रोदे वा कृते तस्मिन्नेव दिने श्राद्धहोमजपादिकर्मयोग्यो न भवतीत्यर्थः ॥ उपलक्षणं चैतत् । आशौचापनोदकविध्यविधानेऽपि कर्मयोग्यो न भवतीति ग्राह्यम् । अत एव मुख्यकर्तुः प्रेतकृत्याकरणे कर्मानर्हत्वमभ्यधायि ॥ किञ्च, वृद्धशातातपः— 'शावे च सूतके चैव द्वितीये दशमेऽहनि । क्षौरं चेन्न प्रकुर्वीत तस्मात्केशेषु लीयते' स्मृत्यन्तरे— 'यस्य केशाः शिरोजाता दशमेऽहन्यवापिताः । आशौचं तस्य केशेषु लीयते नात्र संशयः' स्मृतिचन्द्रिकायां च— ''जनने मरणे चैव वपनं दशमेऽनि । आ तस्मान्नाधिकारी स्यादाशौचं सर्वदा भवेत्'' तथा 'तैलाभ्यङ्गे तथा वान्ते श्मश्रुकर्मणि मैथुने । अनाचम्योच्चरन्* विप्रस्त्रिरात्रमशुचिर्भवेत्' अखण्डादर्शे च— ''दम्पती शिशुना सार्धं सूतके दशमेऽहनि । क्षौरं कुर्युस्ततः पूताः स्नानदानादिकर्मसु'' इत्यादीनि तत्तद्विध्यतिक्रमेण कर्मानर्हत्वापादकाशौचप्रतिपादकवचनान्यनुसन्धेयानि ॥ अत्र सूतके दशाहे वपनं पितुरेव नान्येषाम् । आचारात् । 'प्रथमेऽहनि कर्तव्यं वपनं मृतबन्धुभिः । दशाहे वपनं कार्यं सूतके च तथा पितु'रिति वचनाच्च ॥ पारस्करः— 'मृतस्य बान्धवैः सार्धं कृत्वा तु परिदेवनम् । वर्जयेत्तदहोरात्रं दानं श्राद्धादिकर्म च' स्मृत्यन्तरे च— ''मृतमुद्दिश्य यो गच्छेद् घृतप्राशनमाचरेत् ।

* उच्चरन् पुरीषोत्सर्गं कुर्वन्नित्यर्थः ।



वर्जयेत्तदहोरात्रं जपहोमार्चनादिकम्'' श्रीवाराहे च— 'दशाहमध्यं गत्वा तु यो नरो मामथार्चयेत् । सप्तजन्मकृतं पुण्यं तत्क्षणादेव नश्यति ॥ अनुगम्य मृतं प्रेतमिच्छया यस्तु मानवः । आराधयितुमिच्छेन्मां स व्रजत्यधमां गतिम् ॥ हरणं च तथा कृत्वा मृतकस्य वसुन्धरे! । भुक्त्वा श्राद्धं महाभागे! मनुजो मामथार्चयेत् ॥ चटकत्वमनुप्राप्य ततो गोधावपुर्गतः' ॥ श्रीः ॥ ॥ प्रेतकृत्य इति ॥

**ब्रह्मचारिविषये**

'ब्रह्मचारी व्रतीवर्णी'ति यादवः । व्रती सदा पित्रादेः प्रेतकृत्यं करोति तदा प्रेतकृत्ये क्रियमाणे प्रेतक्रियाकरणकालमात्रमशुद्धः । अथ तद्दिनप्रेतकृत्योत्तरकालं स्नानतः शुद्धः । आशौचगृहेऽन्नपानादौ दशाहमशुद्धः । आदिशब्दात् सहवासादिकं गृह्यते । अत्र प्रजापतिः— 'ब्रह्मचारी यदा कुर्यात् पिण्डनिर्वापणं पितुः । तावत्कालं तदाशौचं ततः स्नात्वा विशुध्यति' मनुश्च— ''गुरोः प्रेतस्य शिष्यस्तु पितृमेधं समाचरन् । *प्रेतहारैः समं तत्र दशरात्रेण शुध्यति'' देवलः— 'आचार्यं स्वमुपाध्यायं मातरं पितरं गुरुम् । निर्हृत्य तु व्रती प्रेतं न व्रतेन वियुज्यते' भृगुः— 'मातामहं मातुलं च तत्पत्न्यौ चानपत्यके । व्रती संस्कुरुते यस्तु व्रतलोपो न तस्य हि' याज्ञवल्क्यः— 'आचार्यपित्रुपाध्यायान्निर्हृत्यापि व्रती व्रती । स कटान्नं च नाश्नीयान्न च तैः सह संवसेत्' कटान्नमाशौचान्नम् । तैराशौचिभिः । ब्राह्मे च— 'आचार्यं स्वमुपाध्यायं गुरुं वा पितरं च वा । मातरं वा स्वयं दग्ध्वा व्रतस्थस्तत्र

* प्रेतनिर्हारकैर्गुरुसपिण्डैः ।

**सत्याशौचेऽन्नपानादौ दशाहमशुचिर्व्रती ।**
**स्नानाग्निस्पर्शनाज्याशपुनस्स्नानासुसंयमैः ॥ ८५ ॥**

भोजनम् ॥ कृत्वा पतति यस्तस्मात् प्रेतान्नं न तु भक्षयेत् । अन्यत्र भोजनं कुर्यान्न च तैः सह संवसेत् ॥ एकाहमशुचिर्भूत्वा द्वितीयेऽहनि शुध्यति' व्रतस्थो ब्रह्मचारी । चान्द्रायणादिनिष्ठश्च पतति व्रताद्भ्रष्टो भवति । पुनरेकाहमशुचिर्निर्हारदिनमात्रमेवाशुचिर्द्वितीयादिदिवसेषु प्रेतकृत्योत्तरकालं स्नानाच्छुध्यतीत्यर्थः ॥ व्रतस्थग्रहणं गर्भवतोऽप्युपलक्षणम् । तस्यापि दोषाभावात् । (तथा मनुः— 'दहनं वपनं वापि प्रेतस्यान्यस्य गर्भवान् । न कुर्यादुभयं तत्र कुर्यादेव पितुः सदा) ॥ ज्येष्ठस्य चानपत्यस्य मातुलस्यासुतस्य च' वसिष्ठः— 'ब्रह्मचारिणः शवकर्मिणो व्रतान्निवृत्तिरन्यत्र मातापित्रोः' स्मृत्यन्तरे च— 'दहनादिसपिण्डान्तं ब्रह्मचारी करोति चेत् । अन्यत्र मातापित्रोः स्यादुपनीय पुनर्व्रती' इति ॥ श्रीः ॥ **॥ स्नानाग्नीति ॥** स्पष्टोऽर्थः ।

**अनुगन्तृ-विषये**

अत्र मनुः— 'अनुगम्येच्छया प्रेतं †ज्ञातिमज्ञातिमेव वा । स्नात्वा सचेलं स्पृष्ट्वाग्निं घृतं प्राश्य विशुध्यति' याज्ञवल्क्यः— 'अनुगम्याम्भसि स्नात्वा स्पृष्ट्वाग्निं घृतमुक्छुचिः' उशना अपि— 'अनुगम्य मृतं प्रेतं ज्ञातीनप्यनुसृत्य च । स्नात्वा घृतं च भक्षित्वा पुनः स्नानं समाचरेत्' कवषश्च— ''अनुगम्य शवं बुद्ध्या स्नात्वा स्पृष्ट्वा हुताशनम् । सर्पिः प्राश्य पुनः स्नात्वा *प्राणायामैर्विशुध्यति'' हारीतः— 'आर्द्रवस्त्र

† ज्ञातयो मातृसपिण्डाः । इतरेषां तु विहितत्वान्न दोषः । * प्राणा-



परित्यज्य शुष्कवस्त्रेण मज्जनम् । शवानुगमने क्षौरे पुनः स्नानं विधीयते' अत्रानुगमनस्यैव विधानान्नाग्रे पार्श्वयोर्वा गन्तव्यम् । 'प्रेतस्य पार्श्वयोरग्रे न गच्छेयुः कदाचन । तस्मादग्रे तु गन्तॄणामायुः क्षीणं पदे पदे ॥ मृतस्य पश्चाद्गमने प्रायश्चित्तं विधीयते । किल्बिषादग्रगमने निष्कृतिर्नोपपद्यत' इति दोषश्रवणात् । स्मृत्यन्तरे विशेषः— 'संस्कारोपक्रमात् पूर्वं कामं स्नात्वा विशुध्यति । आरब्धे तु हि संस्कारे समाप्ते स्नानमाचरेत्' एतदन्यविषयम् । आरम्भात् प्राक् परः स्नायात्तस्य शुद्धिर्भविष्यति । सर्वेषां तु सपिण्डानां कपालदहनात् परम्' इति स्मरणात् । 'अनुगन्ता तु न स्नायाद्यावद्धूमस्य दर्शनम् । ततः पूर्वं तु न स्नानं विहितं सोमयाजिनः' इत्यादिस्मृतेश्च ॥ अत्र यावद्धूमदर्शनादित्यनेन सपिण्डानुगन्तृव्यतिरिक्तस्य अग्निसंयोगोत्तरकालं स्नानं भवतीति गम्यते । तथा शातातपः— 'शरीरमग्नौ संयोज्यानवेक्षमाणा अपोऽभ्युपयन्ती'ति ॥ प्रचेताः— 'नदीकूलं ततो गत्वा शौचं कृत्वा यथार्थवत् । वस्त्रं संशोधयेदादौ ततः स्नानं समाचरेत् ॥ सचेलस्तु ततः स्नात्वा शुचिः प्रयतमानसः । पाषाणं तत्र चाधाय विप्रो दद्याद्दशाञ्जलीन् ॥ द्विदशं क्षत्रिये दद्याद्वैश्ये पञ्चदश स्मृताः । त्रिंशच्छूद्राय दातव्यास्ततः स्वं प्रविशेद्गृहम् ॥ ततः स्नानं पुनः कार्यं गृहशौचं च कारयेत् । अत्र ज्ञातिमज्ञातिमेव वेत्यविशेषस्मरणात् सपिण्डानामप्यग्निसंस्पर्शनादिकं भवत्येव । 'शवेन सह गत्वा तु ज्ञातिरज्ञातिरिच्छया । स्नात्वा स्पृष्ट्वा तु ज्वलनं घृतं प्राश्य विशुध्यति'

यामाश्च त्रयः ।

**द्विजातयो विशुध्यन्ति सजातीयशवानुगाः ।**
**त्र्यहं शूद्रानुगे विप्रे द्व्यहं विड्भूपयोस्ततः ॥ ८६ ॥**

इति वचनाच्च । अत्र स्मृत्यन्तरे विशेषः– 'प्रवेशनादिकं कुर्याद्दाहके-नापि नैव तु । वोढा चैवानुगन्ता च पुरा स्नानाच्च योषिताम् ॥ अ-स्नात्वा चेद्विशेद्ग्रामं श्मशानाद्बुद्धिपूर्वकम् । त्रिरात्रेण विशुद्धिः स्याद-मत्याह्ना तथैव च' बालादिविषये जाबालिः– 'मृतं बालं च वृद्धांश्चा-

**बालप्रेतानुगमने**

नाथं विप्रमनुव्रजेत्। द्विजः स्नानेन शुध्येत घृतप्राशाग्निना विना' अखण्डादर्शे च– 'सर्ववेदं क्रतुश्रेष्ठं बालं प्रेत-मनायकम् । अनुगम्य विनाज्याग्निं द्विजः स्नानेन शुध्यति' स्मृत्यन्तरे च— 'अनाथमनुपेतं च प्रेतं कन्यामनुव्रजन् । अनूचानं क्रतुश्रेष्ठं न प्राश्नीयाद् घृतं द्विजः' अत्रापि करणे शोधनम् । अकरणेऽपि न दोष इत्युक्तम् । ग्रन्थेषु सर्वत्रापि कथञ्चिद् घृताद्यसम्भवे स्मृत्यन्तरे विशेषः– 'अग्र्यभावे घृताभावे सचेलं स्नानमाचरेत् । सव्याहृत्या च गायत्र्या दशकृत्वोऽभिमन्त्रिताः ॥ अर्धाञ्जलिमपः पीत्वा शुद्धिमाप्नोति वै द्विजः' ॥ श्रीः ॥ ॥ **त्र्यहं शूद्रानुग इति** ॥ शूद्रप्रेतानुगे विप्रे त्र्यहं भवति ।

**विजात्यनुगमने**

शूद्रप्रेतानुगयोर्वैश्यभूपयोर्द्व्यहम् । ततोऽनन्तरं वि-प्रादीनां त्रयाणां समुद्रगानदीस्नानं गायत्र्या अष्टोत्त-रसहस्रजपश्च भवति । तथा पराशरः– ''प्रेतीभूतं तु यः शूद्रं ब्राह्मणो ज्ञानदुर्बलः । अनुगच्छेन्नीयमानं त्रिरात्रमशुचिर्भवेत् ॥ त्रिरात्रे तु ततः पूर्णे नदीं गत्वा समुद्रगाम् ! प्राणायामशतं कृत्वा



**नदीस्नानं च गायत्र्याः सहस्रं साष्टकं जपः ।**
**द्विजप्रेतानुगः शूद्रः शुध्येत् स्नानेन विण्नृपौ ॥ ८७ ॥**
**स्वाग्र्यप्रेतानुगौ स्नानवह्निस्वर्शाज्यपानतः ।**
**ब्राह्मणस्य तु विड्भूपप्रेतानुगमने सति ॥ ८८ ॥**

घृतं प्राश्य विशुध्यति' एतच्च बुद्धिपूर्वप्रवृत्तिविषयम् । याद‍ृच्छिकानु-गमने ''शूद्रस्य प्रेतस्य यद‍ृच्छयानुगमने ब्राह्मणः स्रवन्तीमासाद्य गायत्र्या अष्टसहस्रं जपित्वा शुध्यति । क्षत्रियानुगमने त्वर्धसहस्रं वैश्यानुगमने पादोन''मित्यङ्गिरसा विशेषस्मरणात् ॥ पारस्करश्च— 'सजातेर्दिवसेनैव द्व्यहात् क्षत्रियवैश्ययोः' विष्णुः– 'द्विजः शूद्रानु-गमनं कृत्वा स्रवन्तीमासाद्य गायत्र्यष्टसहस्रं जपे'दिति ॥ अत्र प्राणा-यामगायत्रीजपयोर्विकल्पः ॥ श्रीः ॥ ॥ **द्विजप्रेतेति** ॥ द्विजा ब्राह्मणाद्याः । तत्प्रेतानुगः शूद्रः स्नानेन शुध्येत् ।

**शूद्रादिविषये**

वैश्यभूपौ तु स्वस्वोत्कृष्टवर्णप्रेतानुगौ स्नानवह्निस्प-र्शाज्यप्राशनैः शुध्येताम् । तत्र प्रचेताः– ''शूद्रः प्रेतानुगमनं कृत्वा तु स्नानमाचरे''दिति ॥ प्रेतः स्वोत्कृष्टवर्णः । स्व-जातिविशेषस्य वक्ष्यमाणत्वात् । उशना अपि– 'अनुगम्य द्विजान् प्रेतांस्तज्ज्ञातीननुसृत्य च । स्नात्वा घृतं च भक्षित्वा ततः स्नानं समाचरेत्' वृद्धवसिष्ठः– 'अनुगम्यान्वाभाष्याग्र्यानग्निं स्पृष्ट्वा पुनरव-गाह्य तैः सह च द्वारं विशेरन्' ॥ श्रीः ॥ ॥ **ब्राह्मणस्य त्विति** ॥

**विप्रविषये**

अत्र वसिष्ठः– 'मानुषास्थि स्निग्धं स्पृष्ट्वा त्रिरात्रमा-शौचम् । अस्निग्धे त्वहोरात्रं शवानुगमने चैव'मिति ॥

**पक्षिण्यहर्नदीस्नानं गायत्र्यष्टशतं जपः ।**
**शूद्रप्रेतानुगे शूद्रे शवं स्पृश्य हरन्यथा ॥ ८९ ॥**
**एककालस्तथा रोदे स्नानमेवास्थ्नि सञ्चिते ।**
**स्नानं सवर्णरोदेऽस्थ्नि सञ्चिते नृपवैश्ययोः ॥ ९० ॥**

'वैश्यानुगमने पुनः पक्षिणी'ति । क्षत्रियस्यानन्तरं वैश्यानुगमनेऽहोरात्रम् । एकान्तरशूद्रानुगमने पक्षिणी वैश्यस्य शूद्रानुगमने एकाहमि'ति विज्ञानेश्वरेण वसिष्ठवचनसमर्थनात् । वृद्धपराशरः— "क्षत्रियं मृतमज्ञानाद्ब्राह्मणो योऽनुगच्छति । एकाहमशुचिर्भूत्वा पञ्चगव्येन शुध्यति ॥ शवं च वैश्यमज्ञानाद्ब्राह्मणो योऽनुगच्छति । कृत्वा शौचं द्विरात्रं च प्राणायामान् षडाचरेत्" च्यवनः— 'सचेलमवगाह्योत्तीर्याग्निमुपस्पृश्य गायत्र्यष्टशतं जपेत् । घृतं प्राश्य पुनः स्नात्वा त्रिराचामेत्' विष्णुः— "द्विजः शूद्रानुगमने स्रवन्तीमासाद्य गायत्र्यष्टसहस्रं जपेत् । द्विजप्रेतस्याष्टशत"मिति ॥ श्रीः ॥ **॥ शूद्रप्रेतानुग इति ॥** शवं स्पृशतीति शवस्पृक् तस्मिन्नहोरात्रम् । अन्यथा शवस्पर्शरहिते एककालः । दिवा वा निशि वानुगमने तत्र शेषकालः । तथा रोदे शवस्पर्शयुक्ते आतुरव्यञ्जने दिनम् । अन्यथा सञ्चयात् प्रागेककालः । ऊर्ध्वं स्नानमेव । तथा पारस्करः— 'सजातेर्दिवसादेव व्यहात् क्षत्रियवैश्ययोः । स्पर्शं विनानुगमने शूद्रो नक्तेन शुध्यति' ब्राह्मे च— 'कृते तु केवलस्नानं क्षत्रविट्शूद्रजन्मनाम्' श्रीः ॥ **॥ स्नानं सवर्णरोद इति ॥** अस्थ्नि सञ्चिते नृपवैश्ययोः समानव-

**शूद्रस्य सजातीयानुगमने**



**असञ्चिते सचेलं तद्विप्रस्याचमनाप्लवौ ।**
**निकृष्टेष्वाप्लवाचामौ वर्णाग्र्येषु दिनाप्लवौ ॥ ९१ ॥**
**प्राक् पश्चादस्थिचयनादातुरव्यञ्जने मिथः ।**
**अकृतेऽस्थिचये शूद्रादातुरव्यञ्जने कृते ॥ ९२ ॥**

र्णातुरव्यञ्जने कृते स्नानं भवति । असञ्चिते तस्मिन् सचेलं तत्स्नानम् । विप्रस्य सवर्णरोदे अस्थ्नि सञ्चिते आचमनम्, असञ्चिते स्नानम् । तथा ब्राह्मे— 'मृतस्य यावदस्थीनि ब्राह्मणस्याहृतानि तु । तावद्यो बान्धवस्तत्र रौति तद्बान्धवैः सह ॥ तस्य स्नानाद्भवेच्छुद्धिस्ततस्त्वाचमनं स्मृतम् । सचेलं स्नानमन्येषामकृते त्वस्थिसञ्चये ॥ कृते तु केवलस्नानं क्षत्रविट्शूद्रजन्मनाम्' ॥ श्रीः ॥ **॥ निकृष्टेष्वाप्लवेति ॥**

**रोदेऽस्थिसञ्चयने च**

ब्राह्मणक्षत्रियविशामन्योन्यमातुरव्यञ्जने सति अस्थिसञ्चयात् प्राक् पश्चाच्च क्रमेण स्नानाचमने निकृष्टेषु हीनवर्णेषु भवतः । विप्रस्य नृपवैश्यौ निकृष्टौ । नृपस्य वैश्यः । एवं वर्णाग्र्येष्वपि । अस्थिसञ्चयनात् प्राक् पश्चाच्च मिथो रोदने क्रमाद्दिनस्नाने भवतः । तथा पारस्करः— 'अस्थिसञ्चयनादर्वाग्रुदित्वा स्नानमाचरेत् अन्तर्दशाहे विप्रस्य ऊर्ध्वमाचमनं स्मृतम्' विप्रस्यान्तर्दशाहे नृपादिनिकृष्टोऽस्थिसञ्चयनात् प्राग्रुदित्वा स्नानमाचरेत् । तदूर्ध्वमाचमनमित्यर्थः ॥ ब्राह्मेऽपि— 'अनस्थिसञ्चये विप्रो रौति चेत् क्षत्रवैश्ययोः तदा स्नात्वा सचेलं तु द्वितीयेऽह्नि विशुध्यति ॥ कृते तु सञ्चये विप्रः स्नानेनैव विशुध्यति' अत्र पारस्क-

**परस्परातुरव्यञ्जने**

**द्व्यहं द्विजे त्र्यहं विप्रे दिनं सर्वेषु सञ्चिते ।**
**स्पृष्टे मर्त्यास्थ्नि तु स्निग्धेत्रिरात्रं नीरसे दिनम् ॥ ९३ ॥**

रब्राह्मपुराणवचने विप्रशब्दो नृपवैश्ययोरप्युपलक्षणमिति व्याख्यातम-खण्डादर्शादौ ॥ श्रीः ॥ ॥ **अकृतेऽस्थीति** ॥ अकृतेऽस्थिसञ्चयने शूद्रनिमित्तातुरव्यञ्जने नृपादिभिः कृते च नृपे च वैश्ये च द्व्यहं भवति । विप्रे तु त्र्यहम् । अस्थ्नि सञ्चिते सर्वेषु विप्रादिषु त्रिष्वपि दिनं भवति । तथा पारस्करः– 'अस्थिसञ्चयनादर्वाग्यदि विप्रोऽश्रु पातयेत् । मृते शूद्रगृहं गत्वा त्रिरात्रेण विशुद्ध्यति ॥ अस्थिसञ्चयनादूर्ध्वमश्रुपाते द्विजातयः । अहोरात्रेण शुद्ध्यन्ति वाससां क्षालनेन च ॥ द्व्यहात् क्षत्रियवैश्ययो'रिति च ॥ अत्र शूद्रगृहं गत्वेत्यातुरव्यञ्जनोपलक्षणम् । 'शावे शावगृहं गत्वा श्मशाने वान्तरेऽपि वा । आतुरव्यञ्जनं कृत्वा दूरस्थोऽप्यशुचिर्भवेत् ॥ अस्थिसञ्चयनादर्वागातुरव्यञ्जने कृते । दूरस्थोऽप्यशुचिर्विप्रः परतस्तु शुचिर्भवेत्' इति देवलादिभिर्विप्रविषयातुरव्यञ्जने विप्रस्य दूरस्थस्याप्यस्थिसञ्चयात् प्रागशुचित्वस्मरणात् । अत एव ब्राह्मपुराणम्– 'विनिर्वर्त्य यदा शूद्रा *उदकान्तमुपस्थिताः । द्विजैस्तदानुगन्तव्या एष धर्मः सनातनः' अनुगन्तव्या आतुरव्यञ्जनार्थमिति शेषः । अत्र क्रतुः– 'सूतके प्रेतके चैवमघं शूद्रस्य वर्जयेत्' श्रीः ॥ **स्पृष्टे मर्त्यास्थ्नीति** ॥

**शूद्राद्यातुरव्यञ्जने**

**अस्थिस्पर्शे**

* उदकशब्देनोदकक्रियोच्यते । तस्या अन्तस्समाप्तिस्तां निर्वर्त्य आशौचं परिसमाप्य यदा स्थितास्तदा द्विजैरनुगन्तव्या अनुसर्तव्या इति।



**अमत्या त्वाप्लवाचामौ स्नानं स्निग्धेऽस्थ्न्यभक्षजे ।**
**गुर्वादौ सोदके स्रावे मातृबन्धौ वयस्यघम् ॥ ९४ ॥**

स्निग्धे सरसे मनुष्यास्थ्नि बुद्धिपूर्वकं स्पृष्टे सति स्पृष्टस्य त्रिरात्रं भवति । शुष्केऽस्थ्नि धीपूर्वं स्पृष्टे दिनम् । अबुद्धिपूर्वं स्निग्धे शुष्के चास्थ्नि स्पृष्टे स्निग्धे स्नानम् । शुष्के आचमनमिति । क्रमेणाप्लवाचामौ भवतः । अभक्ष्यसम्भवे पञ्चनखादिव्यतिरिक्ताभक्ष्यजाते स्निग्धेऽस्थ्नि स्पृष्टे स्नानम् । अस्निग्धे त्वाचमनम् । अत्र वसिष्ठः— 'मानुषास्थि स्निग्धं स्पृष्ट्वा त्रिरात्रमाशौचमस्निग्धे त्वहोरात्रम्' च्यवनश्च– 'श्वानं श्वपाकं प्रेतधूमं देवद्रव्योपजीविनं ग्रामयाजकं सोमविक्रयिणं यूपं चितिं च मद्यं च मद्यभाण्डं च सस्नेहमानुषास्थिशवस्पर्शं च रजस्वलां महापातकिनं शवं स्पृष्ट्वा सचेलमवगाह्योत्तीर्याग्निमुपस्पृश्य गायत्र्यष्टशतं जपेत् । घृतं प्राश्य पुनः स्नात्वा त्रिराचामे'दिति ॥ एतद्बुद्धिपूर्वाभ्यासविषयम् । अनभ्यासे वसिष्ठोक्तं द्रष्टव्यम् । अबुद्धिपूर्वविषये मनुः– 'नारं स्पृष्ट्वास्थि सस्नेहं स्नात्वा विप्रो विशुद्ध्यति । आचम्यैव तु निस्नेहं गां स्पृष्ट्वा वीक्ष्य वा रविम्' विष्णुश्च– 'भक्ष्यवर्जं पञ्चनखं शवं तदस्थि सस्नेहं स्पृष्ट्वा स्नायात्' ॥ श्रीः ॥ ननु, स्रावादिविषये तत्र तत्र ग्रन्थेषु वर्णभेदेनाशौचभेदस्योक्तत्वात् कथं चयनाद्यभ्यधायि? इत्यत आह– ॥ **गुर्वादाविति** ॥ आदिशब्देन सुहृदादयोऽहराशौचिनः सङ्गृह्यन्ते । अयमर्थः, मातृबन्धौ गुरौ मित्रे' 'सब्रह्मचारिणि प्रेते'त्यादिभिर्गुर्वादौ यदाशौचमुक्तम्, "मातृष्वसामातुलयोः" 'पक्षिणी

**गर्भस्रावादौ विशेषः**

योनिसम्बन्ध' इत्यादिभिर्मातुलादौ यदाशौचमुक्तम् “आ जन्मनस्तु चौलान्तमादन्तजन्मनः सद्य” इत्यादिभिर्वयसि वर्षादिरूपेऽवस्थाविशेषविषये च यदाशौचमुक्तम्, तत्तत्सर्वमाशौचं सर्ववर्णसमम् । ब्राह्मणक्षत्रियवैश्यशूद्रसाधारणम् । हि प्रसिद्धौ । इतिशब्दः प्रकारवाची । एवं प्रकारेण तत्तदाशौचप्रतिपादनप्रकारेण । विज्ञानेश्वरेण घोषितम् उच्चैर्घुष्टं वचनपूर्वकं व्यवस्थापितमिति यावत् । विज्ञानेश्वरघोषितमित्यनेन प्रतिपादितार्थदार्ढ्यं सूच्यते । अतोऽस्माभिः स्रावाद्याशौचवैषम्यं नोक्तमिति भावः ॥ अत्राङ्गिराः— 'अविशेषेण वर्णानामर्वाक् संस्कारकर्मणाम् । त्रिरात्रात्तु भवेच्छुद्धिः कन्यास्वपि विधीयते' व्याघ्रपादः— 'तुल्यं वयसि सर्वेषामतिक्रान्ते तथैव च । उपेते विषमं वृत्ते तस्मिन्नेवातिकालजम्' पैङ्गलगृह्येऽपि— 'गर्भस्रावे मासतुल्या रात्रयः स्त्रीणाम्' बहुवचनं स्रावाशौचस्य सर्ववर्णसमत्वप्रतिपादनपरम् । हारीतः— 'आ मौञ्जिबन्धनाद्विप्रः क्षत्रियश्चा धनुर्ग्रहात् । आ प्रतोदग्रहाद्वैश्यः शूद्रो वस्त्रद्वयग्रहात् ॥ म्रियते यत्र तत्र स्यादाशौचं त्र्यहमेव च । द्विजन्मनामयं कालस्त्रयाणां तु षडब्दिकः ॥ पञ्चाब्दिकं तु शूद्राणां स्वजात्युक्तमतः परम्' ब्राह्मे पुराणे च— 'अनुपेतोऽपि विप्रस्तु राजा चैवाधनुर्ग्रहः । अगृहीतप्रतोदस्तु वैश्यः शूद्रो द्विवस्त्रधृक् ॥ म्रियते यत्र' इत्यादि 'स्वजात्युक्तमतः पर'मित्यन्तं हारीतवचनात् । विज्ञानेश्वरे— 'तुल्यं वयसी'ति व्याघ्रपादवचनं लिखित्वा घोषितम् । तद्यथा अयमर्थः, वयसि वर्षादिरूपे यदाशौचं आ दन्तजन्मनः सद्य इत्यादिवाक्यविहितं तत्सर्वेषां ब्राह्मणादिवर्णानां तुल्यम् । अविशिष्टमतिक्रान्ते च दशाहा-



**सर्ववर्णसमं हीति विज्ञानेश्वरघोषितम् ।**
**स्मृतिद्वैधे परोक्षेऽल्पं प्रत्यक्षे गुर्विति स्थितिः ॥ ९५ ॥**

दित्र्यहादि यदाशौचं तदपि सर्वेषामविशिष्टम् । उपेते पुनरुपरते दशद्वादशपञ्चदशत्रिंशद्दिनानीत्येवमाशौचम् । ब्राह्मणादीनां तस्मिन्नेवोपनीतमरण एवातिकालजं अतिक्रान्ताशौचं भवति । न वयोवस्थातिक्रमे । इदं च वयोवस्थाशौचं सर्ववर्णसाधारणम् । 'क्षत्रियस्य द्वादशाहानीत्य'विशेषोपादानेन विधानात् । अत एव मनुनोपात्तवर्णविशेषेणाशौचविधौ साधारण्यप्रतिपादनात् । चातुर्वर्ण्याधिकारे सत्यपि पुनश्चतुर्णामपि वर्णानां यथावदनुपूर्वश इत्युक्तम् । अतोऽयं 'पिण्डयज्ञाव्रतादेय'मित्यादिपिण्डोदकदानविधिः सर्ववर्णसाधारणः । यथा वा समानोदकाशौचविधिः । “अन्तरा जन्ममरण” इति सन्निपाताशौचविधिश्च । यद्वा गर्भस्रावे मासतुल्या इति स्रावाशौचविधिः प्रोषिते कालशेषः स्यादिति विदेशस्थाशौचविधिश्च । यथा गुर्वाद्याशौचविधिश्च सर्ववर्णसाधारणः । तथा वयोवस्थानिमित्तमप्याशौचं साधारणमेव । अत एव 'क्षत्रे षड्भिः कृते चौले वैश्ये नवभिरुच्यते । ऊर्ध्वं त्रिवर्षाच्छूद्रे तु द्वादशाहं विधीयते' तथा, “यत्र त्रिरात्रं विप्राणामाशौचं सम्प्रचक्षते । तत्र शूद्रे द्वादशाहं षण्णवक्षत्रवैश्ययोः” इत्यादिऋष्यश्रृङ्गवचनानि विहितत्वबुद्ध्या नाद्रियमाणैर्धारेश्वरविश्वरूपमेधातिथिप्रभृतिभिराचार्यैरयमेव साधारणपक्षोऽङ्गीकृत” इति ॥ श्रीः ॥ एकविषये गुरुलघ्वाशौचप्रतिपादकवचनानां व्यवस्थामाह— ॥ स्मृतिद्वैध इति ॥

**स्मृतीनां द्वैधे** स्मृत्योर्द्वैविध्ये असन्निधाने अल्पाशौचं सन्निधावधि-

यथा हि योनिसम्बन्धेष्वहर्विधिरसन्निधौ ।
याज्यादौ श्वशुरादौ च शिष्यादौ पक्षिणीविधिः ॥ ९६ ॥

काशौचमिति ॥ एवं प्रकारेण स्थितिः मर्यादा व्यवस्थेत्यर्थः ॥ ८३ ॥ ८४ ॥ ८५ ॥ ८६ ॥ ८७ ॥ ८८ ॥ ८९ ॥ ९० ॥ ९१ ॥ ॥ ९२ ॥ ९३ ॥ ९४ ॥ ९५ ॥

एतदेवोदाहरति— ॥ **यथा हि योनिसम्बन्धेष्विति** ॥ योनिसम्बन्धेषु पूर्वोक्तेषु पक्षिण्याशौचिषु मातुलेयादिषु योऽय'महस्त्वदत्तकन्यास्वि'ति दिनविधिरयमसन्निधौ भवति । अत्र मातुलग्रहणं योनिसम्बन्धोपलक्षणमिति विज्ञानेश्वरोक्तमिति पूर्वमेवोक्तम् । याज्यादावित्यादिशब्देन गुरुतत्पत्नीतत्पुत्रादय उच्यन्ते । एषां त्र्यहाशौचिनां पक्षिणीविधिरसन्निधाने भवति । (श्वशुरयोश्च भगिन्यां च मातुलान्यां च मातुले । पित्रोः स्वसरि तद्वच्च पक्षिणीं क्षपयेन्निशाम्' ''मातुले श्वशुरे मित्रे गुरौ गुर्वङ्गनासु च । आशौचं पक्षिणीं रात्रिं मृता माता-मही यदि ॥ मातुले पक्षिणीं रात्रिं शिष्यर्त्विग्बान्धवेषु च''त्यादिवचनैस्त्र्यहाशौचविषयोक्तपक्षिणीविधिरसन्निधाने भवतीत्यर्थः ॥ तथा विज्ञानेश्वरेणैतान्युदाहृत्य 'अन्तरा मुक्त'मित्याद्याशौचविशेषप्रतिपादकवचनान्यन्वेषणीयानि । तानि गौरवभयान्न लिख्यन्ते । तेषु चैकविषये गुरुलघ्वाशौचप्रतिपादकतया परस्परविरुद्धेषु सत्सु सन्निधिविदेशस्थापेक्षया व्यवस्थानुसन्धातव्येति । (यत्तु, मनुना— 'त्रिरात्रमाहुराशौचमाचार्ये संस्थिते सति । तस्य पुत्रे च पत्न्यां च दिवारात्रमिति स्थितिः' इत्याचार्यस्य पत्नीपुत्रयोर्मृतौ दिनमुक्तम् । तन्मन्दप्रतिपत्ति-



(अघान्ते सङ्गवे स्नात्वा विप्रः स्पृष्ट्वाम्बु शुध्यति ।)
नृपादिर्वाहनादीनि नान्यथेत्यब्रवीन्मनुः ॥ ९७ ॥

विषयम् ।) अतिक्रान्तकालविदेशस्थविषयं वा । अन्यथा 'गुरौ गुर्वङ्गनासु चे'ति पक्षिणीविधिर्विरुध्येत (स्मृत्यर्थसारे च— 'मातामहगुर्वाचार्यदौहित्रस्वस्रीययज्ञकतुकर्मर्त्विग्याज्यशिष्येषु एकरात्रं मरणे त्रिरात्रं ग्रामान्तरे पक्षिणी'ति )। गुरुरत्र पुत्र्याः पितानौरसपुत्रप्रतियोगिपिता वा ॥ ९६ ॥

**अघान्तकृत्यम्** ॥ **अघान्ते सङ्गव इति** ॥ अनुष्ठिताशौचो विप्रः स्वाशौचकाले गते परेद्युरपि सङ्गवकाले स्नात्वा पाणिना जलं स्पृष्ट्वा शुध्यति । आदिशब्देन वैश्यशूद्रौ गृह्येते । द्वितीयादिशब्देन प्रतोदयष्टी । (अत्र श्रुतिः— 'अघान्ते अघभाजः सङ्गवे स्नात्वा ग्रामं प्रविशेयु'रिति ॥) मनुरप्याह— 'विप्रः शुध्यत्यपः स्पृष्ट्वा क्षत्रियो वाहनायुधम् । वैश्यः प्रतोदं रश्मिं वा शूद्रो यष्टिं कृतक्रिय' इति ॥) कृतक्रियः कृतोदकादिक्रियः । अनुष्ठितकालाशौचश्च कृतक्रिय इति प्रत्येकमभिसम्बध्यते । स्पृष्ट्वेति स्पर्शनक्रियैवोच्यते । वाहनादिष्वपि स्पर्शस्यानुषङ्गादयमर्थः, ब्राह्मणादिमध्ये यस्य यावत्कालमाशौचमुक्तं कृतक्रियस्तस्याशौचकालस्यानन्तरं स्नात्वा पाणिना अपः स्पृष्ट्वा शुध्येत् । न तत्कालातिक्रममात्रेण । एवं क्षत्रियो वाहनादिकं स्पृष्ट्वा शुध्यति । वैश्यः प्रतोदं रश्मिं वा स्पृष्ट्वा शुध्यति । शूद्रो यष्टिं स्पृष्ट्वा शुध्यतीति ॥ (सङ्ग्रहे च— 'आशौचान्ते कृतस्नानः स्वस्तिवाचनपूर्वकम् । ब्राह्मणान् भोजयेत्तत्र शुद्धये विष्णुतुष्टये') श्रीविष्णुपुराणे

एकत्र सुखबोधार्थं सुसमीक्ष्य बहुस्मृतीः ।
कृतोऽघनिर्णयः स्पष्टं गृह्यतां तद्बुभुत्सुभिः ॥ ९८ ॥
हारीतो वेङ्कटेशार्यः श्रुतिस्मृतिविचक्षणः ।
व्यक्तं श्लोकशतेनेत्थमकरोदघनिर्णयम् ॥ ९९–१०० ॥

इति श्रीहारीतवंशश्रीरङ्गनाथार्यपुत्रसरस्वतीवल्लभापर-
नामधेयश्रीवेङ्कटेशविरचिता अघनिर्णय-

# शतश्लोकी

समाप्ता ।

॥ श्रीकृष्णार्पणमस्तु ॥

च– 'वाय्वायुधप्रतोदास्तु दण्डश्च द्विजभोजनात् । स्पृष्टव्योऽनन्तरं वर्णैः शुद्ध्येरन् वै ततः क्रमात्' उपसंहरति– ॥ एकत्रेति ॥ एकस्मिन्नेव सङ्ग्रहे कार्त्स्न्येन शावसूतकाशौचसुखावगमार्थं मनुयाज्ञवल्क्यपराशर-बोधायनगौतमसंवर्तदक्षाद्युक्ता विज्ञानेश्वराखण्डादर्शस्मृत्यर्थसारवरदरा-जीयादिकाः सङ्ग्रहरूपाश्च स्मृतीः सुतरां सम्यग् दृष्ट्वा निरूप्य ताभ्यः सारसर्वस्वमुद्धृत्य स्पष्टं प्रकरणशुद्धियुक्तं यथा भवति तथा अघनिर्णयः कृतस्तस्माच्छावसूतकाशौचतत्त्वजिज्ञासुभिरघनिर्णयोऽङ्गीक्रियताम् । स्मृतिनिबन्धनत्वादयं निर्विशङ्कमङ्गीकार्य इत्यर्थः ॥ ९८ ॥

नन्वयं कियद्भिः श्लोकैः कृतः? को वास्याघनिर्णयस्य कर्तेत्यत आह– ॥ हारीत इति ॥ स्पष्टोऽर्थः । समाप्तश्चाघनिर्णयः ९९



मिथो विभिन्नस्मृतिवाक्यभङ्गैर्गूढार्थभावो गहनो मयायम् ।
तीर्णोऽतिकृच्छ्रादघनिर्णयाब्धिः श्रीविष्णुवाक्यात् प्रतिचोदितेन ॥
सरस्वतीवल्लभसूरिपौत्रः श्रीरङ्गनाथार्यसुतः सुशीलः ।
यजुर्निधिर्व्याकृत वेङ्कटेशो विष्णोः प्रसादादघनिर्णयं सः ॥

इति श्रीहारीतवंशश्रीरंगनाथार्यपुत्रसरस्वतीवल्लभापरनामधेयश्री-
**वेङ्कटेशविरचितस्मृतिसारसर्वस्वसमाख्या**
अघनिर्णयव्याख्या समाप्ता ।



स्मृतिः क्वचन वा न वा चरितमन्त्रमृग्यं क्वचित्
न किञ्चिदपि चेत् त्रयी बत न लक्षणं शास्त्रवित् ।
तदेतदखिलाश्रयो विजयतेऽद्य विद्यानिधिः
सुधीः परमवैदिकः स हि सरस्वतीवल्लभः ॥

ग्रन्थोऽयं
उडुपिक्षेत्रवास्तव्येन
श्रीमन्मध्वसिद्धान्तग्रन्थालयाधिपतिना
**पावञ्जे गुरुरायशर्मणा**
स्वकीये
**उडुपि श्रीकृष्णमुद्रालये**
शा० १८४१तमे शके मुद्रयित्वा
प्रकाशितः ।



मूले पतितश्लोकाः

२४श्लोकानन्तरं "स्रावः पातस्ततो द्वयो"रित्यतः परं पठनीयम्–

**पाते सद्यस्तु कठिने त्र्यहं पित्रादिषु स्मृतम् ।**

इदं पद्यार्धं ४२पृष्ठे ९पंक्तौ व्याख्यायां वर्तते ।

३१पद्यं ४९–५०पृष्ठेऽपि द्विवारं पतितं ३२संख्ययापि गणितम् ।

३९श्लोकानन्तरं "यदि जन्मर्तुमृत्यव" इत्यतः परं पठनीयम्–

**प्रभातादि यदि व्यंशे पूर्वाहाद्यघमिष्यते ।**

४२श्लोकानन्तरं 'दशरात्रात्यघश्रुता'वित्यतः परं पाठ्यम्–

**अत्याशौचं दिनं सद्यस्त्र्यहैकाहमशौचिनोः ।**
**पक्षिण्यघिष्वघान्तश्रुत्स्वेककालोऽन्यथा प्लवः ॥**

इदं पद्यं ६९पृष्ठे २१पंक्तौ व्याख्याने वर्तते ।

४३श्लोकानन्तरं 'न च तत्सूतकात्यये' इत्यतः परं पाठ्यम्–

**कृच्छ्रादीनां समाप्तिश्चेदघे शिष्टाहमिष्यते ।**
**तद्बहिश्चेत् त्र्यहादिः स्यादित्याह भगवान् मनुः ॥**

इदं पद्यं ७१पृष्ठे २०पंक्तौ विद्यते ।

४७पद्यानन्तरं 'पक्षिणी तदघात्पर'मित्यतः परं पाठ्यम्–

**स्वाशौचकालतश्चैव सूतिकाजनकोऽग्निदः ।**
**शुध्येरन्नघयोगेऽपि न पूर्वाशौचशेषतः ॥**

इदं पद्यं ७६पृष्ठे ३पंक्तौ वर्तते ।

९३पद्यार्धानन्तरं 'विशुध्येतां मरणे तु त्रिरात्रत' इत्यतः परं पाठ्यम्

**स्वगृहे श्रोत्रिये प्रेते त्र्यहमश्रोत्रिये दिनम् ।**
**श्रोत्रिये तु मृते ग्रामे त्र्यहमश्रोत्रियेऽहनि ॥**

इदं पद्यं ८४पृष्ठे ५पंक्तौ पूर्वोत्तरार्धव्यत्यासेन विद्यते ।

एवमाहत्य त्र्युत्तरशतमूलश्लोका भवन्ति । एतेषु प्रथमश्लोकस्तावन्मंगलाचरणरूपः । अन्तिमौ द्वौ कर्तृफलादिबोधकौ । इति श्लोकत्रयादवशिष्टैः शतसंख्याकैः आशौचप्रतिपादकैः श्लोकैः "शतश्लोकी" इत्यन्वर्थं नाम ग्रन्थकृताकारि ॥